वारुणी सा शिला ज्ञेया प्रतिमा वारुणी तया।।

निर्मिता शान्तिदा चापि भवेत् शुभविधायिनी।

## ४.५.२२ माहेन्द्री शिला

**खि.८.३२ - ३४**

उत्तरे तोयसंवीता पश्चिमे क्षीरवृक्षयुक्।।

व्रीहिपाकवृताऽवाच्यां सतृणा पूर्वभागतः।
तादृशी तु शिला ग्राह्या प्रतिमाकरणे शुभा।।

माहेन्द्री प्रतिमा सा तु पुष्टिदा राज्यभोगदा।

## ४.५.२३ आग्नेयी शिला

**खि.८.३४ - ३६**

पलाशाः खदिरा आम्रा यस्या आग्नेयदिक्स्थिताः।।

तित्तिर्यश्च कपोताश्च गृध्राश्चैव घनाघनाः।
भ्रमराश्च मयूराश्च दृश्यन्ते यत्र सन्ततम्।।

तोयमन्तर्गतं स्तोकं तामाग्नेयीं विनिर्दिशेत्।
आग्नेयी प्रतिमा प्रोक्ता आयुरारोग्यपुष्टिदा।।

## ४.५.२४ वायवी शिला

**खि. ८.३७ - ३९**

पीलुश्लेष्मातकाकीर्णा विभीतकवृता च भूः।
महावृक्षाश्च परितः पक्षिणो मृगतृष्णिकाः।।

भारुण्डाश्चैव दृश्यन्ते पांसुकूलकमाश्रिताः।
शृगाला यत्र दृश्यन्ते तथैव मृगपक्षिणः।।

अन्यैश्च बहुभिर्वृक्षैर्जीमूतादिभिरावृता।

भूमिः सा वायवी प्रोक्ता -------।।

## ४.५.२५ ब्राह्मणयोग्यप्रतिमा तत्फलं च

**खि. ८. ४२, ४४**

कुन्देन्दुक्षीरसदृशी शङ्खमुक्तानिभा तथा।।

मुक्ताभा स्फटिकाभा च श्वेतपद्मदलप्रभा।

कुमुदाभा च या यत्र मृणालीसदृशप्रभा।।

ब्राह्मणस्य समाख्याता प्रतिमा वर्णतः शुभा।

वारुणी प्रतिमा नाम सर्वकामशुभप्रदा।।

**स. १२.११**

**ज्ञा. २८.५५**

[ अत्र ब्राह्मकर्मविवृद्धिदा इति शिलाविशेषणमधिकमिति विशेषः। ]

**प्र. ७.२१. २२**

[ अत्र श्वेता शिला मोक्षप्रदा विशेषतो ब्राह्मणस्य इति निर्दिश्यत इति विशेषः। ]

## ४.५.२६ क्षत्रिययोग्यप्रतिमा तत्फलं च

**खि. ८. ४७ - ४९**

वैदूर्यपद्मरागाभा पद्मोत्पलदलप्रभा।।

चची ? कुन्दुरुसङ्काशा सिन्दूरसदृशी तथा।

दाडिमीपुष्पसदृशी कुसुम्भसदृशप्रभा।।

एषा रक्ता च रक्ताभा क्षत्रिया वर्णतः स्मृता।
माहेन्द्री नाम विज्ञेया नृपाणां प्रतिमोत्तमा।।

**ज्ञा. २८.५५**

[ अत्र क्षात्रवीर्यविख्यातिदा इति शिलाविशेषणमधिकमिति विशेषः। ]

**स. १२.११**

[ अत्र पद्माभा शिला क्षत्रियस्य इति निर्दिश्यत इति विशेषः। ]

**प्र. ७.२१, २२**

[ अत्र रक्ता शिला जयप्रदा क्षत्रियस्य इत्येव निर्दिश्यत इति विशेषः। ]

### ४.५.२७ वैश्ययोग्यप्रतिमा तत्फलं च

**खि. ८. ५०, ५१**

पुष्परागप्रभा चैव तथा मरकतप्रभा।
हरिद्रापीतवर्णाभा रोचनाभा तथैव च।।
एषा पीता च पीताभा वैश्यानां वर्णतः स्मृता।
आग्नेयी सा समुद्दिष्टा वैश्यानां च सुखप्रदा।।

**ज्ञा. २८.५५**

[ अत्र पुष्यरागप्रभा मरकतनिभा गोरोचनाभा वैश्यानां गोधान्यधन-वृद्धिदेति शिलाविशेषणम् अधिकतया निर्दिश्यत इति विशेषः। ]

**प्र.७. २१, २२**

[अत्र पीता रक्ता च शिला वैश्यस्य इत्येव निर्दिश्यत इति विशेषः।]

**स. १२.११**

[अत्र कुलुत्थाभशिला वैश्यस्य इत्यधिकतया निर्दिश्यत इति विशेषः। ]

### ४.५.२८ शूद्रयोग्यप्रतिमा तत्फलं च

**खि. ८. ५२ - ५३**

कृष्णा माषाञ्जननिभा नीलश्यामा तथैव च।

कृष्णा ? रूक्षप्रभा चैव वारुणीं ( वायवीं ? )तां विदुर्बुधाः।।

कृष्णाभा कृष्णवर्णा च विज्ञेया शूद्रसौख्यदा।

लक्षणेन सुसम्पूर्णा भिन्नाञ्जनचयोपमा।।

**ज्ञा. २८.५५**

[ अत्र अवरवर्णजवीर्यपुष्टिप्रदा इति शिलाविशेषणमधिकमिति विशेषः।]

**प्र.७.२१**

[ अत्र कृष्णा शिला शूद्रस्य इत्येव निर्दिश्यत इति विशेषः। ]

**स. १२.१२**

[ अत्र मुद्गवर्णा शिला शूद्रस्य इत्यधिकतया निर्दिश्यते इति विशेषः। ]

### ४.५.२९ शैलजादिबेरवर्णभेदः युगभेदानुरोधेन

**खि. ८.६० - ६२**

कृतत्रेताद्वापरेषु कलौ चैव यथाक्रमम्।।

शुक्लादयस्समुद्दिष्टा वर्णा वर्णक्रमेण वै।

शैलजप्रतिमानां च मृद्बिम्बानां तथात्र तु।।

युगवर्णो हि भगवान् भवेद्विष्णुः सनातनः।

### ४.५.३० शिलासङ्ग्रहणे अनुमताः पर्वतादयः

**खि.८.१३ - १६**

हेमकूटश्च निषधो हिमवान् नीलपर्वतः।

मन्दरो माल्यवांश्चैव त्रिकूटो मलयाचलः।।

गन्धमादनमेरू च दशैते पर्वताः स्मृताः।
एतेषु प्रतिमाः शस्ताः निर्मिताः परिकीर्तिताः ।।

सह्यविन्ध्यमहेन्द्राश्च कैलासश्च तथैव च ।
किष्किन्धश्च तथा पञ्च प्रशस्ता गिरयः स्मृताः।।

शेषाः शैला इति प्रोक्ताः प्रतिमास्तेषु कारयेत्।

**४.५.३१ हेमकूटादिशिलाऽलाभे प्रतिनिधिः**

**खि.८.६०**

हेमकूटाद्यलाभे तु भूमिजां वा समाहरेत्।

**४.५.३२ सिरादि सप्त शिलादोषाः**

**स. १२., १२, १३**

सिरा विवर्णः स्फुटितो भेदो रेखा च पञ्चमः।।

सुषिरश्चैव गर्भश्च सप्त दोषाः शिलागताः।

**ज्ञा. २८.५५**

[ अत्र बिन्दुनिम्नसिरास्फोटविपा(विवर ?)वर्तुलग्रन्थयः शिलादोषत्वेन निर्दिश्यन्त इति विशेषः। ]

**खि.८.५४ - ५६**

रक्तैश्च बिन्दुभिः कीर्णा विष्फुलिङ्गावृता तथा।
बिन्दुभिर्व्यतिकीर्णा च शुक्लपीतप्रभा तथा।।
एवंभूता तु प्रतिमा सर्वलोकाशुभप्रदा।

-------------------------------।।(अत्र ग्रन्थपातः)

स्फोटाश्च बिन्दवो निम्नाः सर्वे दोषा विगर्हिताः।

**प्र, ७.४९, ५४**

[अत्र रेखाबिन्दुकलङ्कहेमकांस्यलोहाख्यविमलाः शिलादोषत्वेन निर्दिश्यन्त इति विशेषः।]

### ४.५.३३ शिलादोषस्य विमलस्य त्रिविधत्वं हेमाख्यादिभेदेन

**प्र . ७.५४**

विमलं हेम कांस्याख्यं लोहाख्यं च त्रिधा स्मृतम्।

### ४.५.३४ सिरादिशिलादोषफलम्

**स. १२.१३ - १५**

सिरया यजमानस्य कुलं भवति निन्दितम्।।

वैवर्ण्यं कीर्तिनाशाय स्फुटितं कुलनाशनम्।

भेदाद् भवति बन्धूनां भेदनं तु तथैव हि।।

वैरूप्यं रेखया चैव सुषिरात् स्थाननाशनम्।

**ज्ञा. २८.५५**

[ अत्र व्याधिवधबन्धनार्थनाशमरणकीर्तिनाशनानि बिन्दुनिम्नसिरास्फोटविपा-( विवर) वर्तुलग्रन्थीनां शिलादोषाणां फलानि निर्दिश्यन्त इति विशेषः।]

**खि.८.५७, ५८**

सिरायां तु स्वयं नश्येत् विवरे पुत्रनाशनम्।

स्वजनो वर्तुले नश्येत् स्थापको ग्रन्थिभिस्तथा।।

स्फोटा हन्यात्तु कर्तारं निम्नो हन्यान्नराधिपम्।

### ४.५.३५ शिलानां गर्भदोषपरीक्षाक्रमः

**ज्ञा. २८. ५५**

छेदने भेदने तद्वर्णविपरीतानि नानावर्णानि मण्डलानि दृश्यन्त यत्र तत्र गर्भ इति जानीयात्।

**स.१२.१५, १६ ; खि. ८.९१ ; प्र. ७.४९**

**य. ११.५,६ ; वि. १५.६८**

### ४.५.३६ शिलानां षोडशविधगर्भाः भेकादिभेदेन

**स. १२.१६ - १८**

भेकोऽहिः शलभो गोधा वृश्चिको गृहगोलि(धि?)का।।

आखुः खद्योतकश्चापि कृकलासो दृषज्जलम्।

चित्रको गोनसश्चापि सिकताकूर्ममत्स्यकाः।।

षोडशैते शिलागर्भाः ।

### ४.५.३७ शिलानां गर्भदोषपरीक्षणावश्यकता

**खि. ८. १०२ - १०४**

तस्माद्यत्नात् परीक्षेत शिला वृक्षांस्तथैव च।।

मोहात् सगर्भशिलया क्रियते प्रतिमा यदि।

तन्मण्डलाधिपस्यैव राज्ञः स्यादाभिचारिकम्।।

उन्मूलितो भवेद्वंशस्तस्माद् गर्भं विशोधयेत्।

येन केन प्रकारेण ऊहापोहौ प्रयोजयेत्।।

### ४.५.३८ शिलागर्भदोषपरीक्षणम्

**स. १२.२६ - ३३**

अलक्ष्ये गर्भचिह्नेपि शोधनोपाय उच्यते।

ब्राह्मी वज्री च शूली च विष्णुक्रान्ता कुबेरदृक्।।

अजाक्षीरेण संपिष्य शिलायां तत्र लेपयेत्।

एकरात्रपरिक्लेदाद् गोधावृश्चिकयोर्वपुः।।

प्रतिभासे तु तत्तोयं सम्प्रक्षाल्य प्रदर्शने।

सहदेवीं च मांसी च वटशृङ्गं तथैव च।।

गोक्षीरेणैव सम्पिष्य कल्कं तत्र प्रलेपयेत्।

एकरात्रसमायोगे कूर्मदर्दुरयोर्वपुः।।

त्रिशूलभूतजा धात्री गोक्षीरेणैव लेपयेत्।

त्रिरात्रात्प्रतिभासस्तु कृकलासो झषस्तथा।।

फलं कुबेरकुष्ठं च मांसी च करवीरकम्।

मुक्ता स्त्रीस्तन्ययुक्तं च शेषप्राणिप्रदर्शनम्।।

लेपयेद्वारुणैर्मन्त्रैः सर्वान् सङ्घान् पृथक् पृथक्।

प्रलेपेषु कृतेष्वेषु न स्याच्चेदं प्रदर्शनम्।।

लेपयेद्वारुणैर्मन्त्रैः सर्वान् सङ्घान् पृथक् पृथक्।

सा शिला तु सुसङ्ग्राह्या विधिना बेरपीठयोः।।

**प्र. ७.४७, ४८**

मूर्धनस्तक्षणं कृत्वा शिलादोषांस्तु लक्षयेत्।

शिलां प्रलिप्य क्षीरेण सर्पिषा सीसगैरिकैः।।

एकरात्रोषितशिलां सम्प्रक्षाल्याम्भसा ततः।

शिलादोषं परीक्ष्यैव कर्तव्यं विधिचोदितम्।।

### ४.५.३९ शिलागर्भदोषविवेकः वर्णानुरोधेन

**स. १२. १८ - २२**

माञ्जिष्ठवर्णे मण्डूको गर्भो भवति मण्डले।।

कृष्णे भुजङ्गमं विद्याच्छलभो नीलवर्णकः(के?)।
पीतके मण्डले गोधा वृश्चिकः स्याद् गवेधुके।।

कपोतवर्णे गर्भे स्यान्मण्डले गृहगोलि (धि?)का।
कपिले मूषिकं विद्यात् खद्योतो मरु ( धु?)सन्निभे।।

अरुणे कृकलासः स्याद् गुडवर्णेऽश्मको भवेत्।
आपो निस्त्रिंशवर्णे तु विचित्रे चित्रकं (वृश्चिकं ?) विदुः।।

गवेधुकाभेऽस्य रुचो गोनसं तत्र निर्दिशेत्।
कूर्माभे कूर्म एव स्याच्छ्यामे मत्स्यो भवेद् ध्रुवम्।।

**ज्ञा. २८. ५५**

[ अत्र पद्मवर्णे वालुकां निर्दिशेदित्यधिकतया निर्दिश्यत इति विशेषः। ]

**खि. ८. ९१ - ९७**

[ काश्यपज्ञानकाण्डवत्।]

**प्र. ७ .५० - ५३**

सिते तु (असिते ?) मण्डले ----------तथा।।

### ४.५.४० शिलागर्भदोषदर्शने फलम्

**ज्ञा. २८.५६**

गर्भदर्शने महत्तरो दोषो भवति।तत्र सर्पदर्शने स्वयमेव कर्ता नश्यति। मूषिके अनपत्यत्वं, कृकलासे अल्पायुः,गोधायामनारोग्यं, शलभे दारिद्र्यं, खद्योते अन्धत्वं, मण्डूके धनक्षयः, सिकतासु व्याधिः, जले शरीरपीडा, गौलिकायां कुलक्षयः। एवमनेके भवन्ति।

**स. १२.२३, २५**

जलाद् भयमरेर्भीतिः सस्यनाशस्तथैव च।
गोपीडाविषयेऽशान्तिस्तस्कराच्चाग्नितो भयम्।।

अर्थहानिरवर्षश्च गर्भस्रावो विवर्षता।
राष्ट्रनाशो महाव्याधिर्वाक्कण्ठबलहीनता।।

एते दोषाः क्रमेणोक्ताः गर्भेष्वेतेषु[1] सत्सु वै ।
तस्मात्परीक्षा कर्तव्या बेरं शैलं च दारवम्।।

**खि.८.९९ - १०४**

गर्भदर्शनदोषं तु शृणुध्वमृषिपुङ्गवाः।।

प्लवगो रोगदः प्रोक्तो गोधा दारिद्र्यकारणम्।
सर्पो दृश्येत यदि तु भार्या नश्यति निश्चयः।।

दर्शने मूषिकायास्तु भविष्यत्यनपत्यता।
अल्पायुः कृकलासे तु दृष्टे भवति गर्भगे।।

पाषाणगर्भो दृश्येत भवेदेव कुलक्षयः।
तस्माद्यत्नात् परीक्षेत शिला वृक्षांस्तथैव च।।

मोहात्सगर्भशिलया क्रियते प्रतिमा यदि।
तन्मण्डलाधिपस्यैव राज्ञः स्यादाभिचारिकम्।।

उन्मूलितो भवेद्वंशः।

---

1 गर्भशिलायाः दुष्फलकारित्वात्।

### ४.५.४१ शिलागर्भदोषदर्शने शान्तिविधानम्

**खि. ८.९८, ९९**

गर्भदोषे महान् दोषो भवत्येव न संशयः ।।

तस्माच्छान्तिं प्रकुर्वीत गर्भोक्तां गर्भदर्शने ।

### ४.५.४२ ग्राह्या शिला

**स. १२.३**

सुस्निग्धाऽस्फुटिता ग्राह्या तरुणा घोषवत्तरा।।

**वा. ४**

### ४.५.४३ अग्राह्या शिला

**वि.१५. ६८**

महादिक्षु अशीर्षा, दुःस्थानस्था चाग्राह्या। --------शिलाच्छेदने तक्षणे चापि मण्डूको दृश्यते यदि सा शिला गर्भिणीति ज्ञात्वा तां यत्नेन परिवर्जयेत्।

**स.१२.३**

विवर्णा स्फुटिता वृद्धा न ग्राह्या स्यात् कदाचन।

**ज्ञा. २८.५४ - ५५**

विदिक्छिरसं विदिङ्मुखीं वर्जयेत्।-------- विसू (?)श्लेष्मातक-विभीतककुस्तुम्भावृतां वायुसूर्याग्निना दग्धां किरातगणदूषितां यक्षरक्षः पिशाचदुष्टां वर्जयेत्। -------- बिन्दुनिम्नसिरास्फोटविपा (विवर?) वर्तुलग्रन्थियुक्तां वर्जयेत्। व्याधिवधबन्धनार्थनाशमरणकीर्तिनाशनत्वात्। ------ सगर्भां वर्जयेत् ।

**खि.८.२२, २६ - ३०, ३९, ४०**

कोणं तु वर्जयेत्तत्र शिलासङ्ग्रहणे सदा।।

------------------------------

------------------------------

नदीतीरे ह्रदतटे लवणोदाप्लुते स्थले।।

ग्राममध्ये श्मशाने च शिला याश्च चतुष्पथे।

अमेध्यभूमौ जाताश्च वर्जनीयाः स्मृताः सदा।।

प्रायशो विषवृक्षाश्च यत्र व्याघ्राहिसूकराः।

सन्ति यस्मिन् वने तत्र न ग्राह्यास्तु शिलाः स्मृताः।।

वल्मीकसङ्कटे देशे वर्जनीयास्तथोषरे।

पतङ्गकृमिकीटानामावासस्थाश्च गर्हिताः।।

वायुसूर्याग्निभिर्दग्धाः किरातगणदूषिताः।

एताः शिला वर्जनीयाः------------।।

भूमिस्सा वायवी प्रोक्ता हेया तत्र शिला मता।।

गृह्यते यदि सा तत्र कर्तुः स्यादाभिचारिकम्।

भयदा द्वेषदा चैव तस्मात्तां परिवर्जयेत्।।

**प्र.७.५३**

[ अत्र गर्भसंयुक्तां विमलैरञ्चितां च शिलां वर्जयेदिति निर्दिश्यत इति विशेषः। ]

**य.११.५**

[ अत्र शिलागर्भं वर्जयेदित्येव निर्दिश्यत इति विशेषः। ]

**वा. ४**

मृदुं च लाघवं चैव लघुशब्दविवर्जितम् ।।

ग्रन्थियुक्तं च वेणुं च सिरागर्भादिसंयुतम् ।
स्फुटिताधिकमूर्तिं च वक्रजातिं च वर्जयेत्।।

कलङ्करेखा बिन्दूंश्च मण्डूककृकलासयोः।
खद्योतकोटरायुक्तं मण्डलं यदि सम्भवेत्।।

अहिपांसुजलैर्युक्तं सर्वं त्यक्त्वा विचक्षणः।

**४.५.४४ शिलानां मुखाद्यङ्गज्ञानावश्यकता**

**ज्ञा.२८. ५६**

मुखं पृष्ठं शिरः पादौ च ज्ञात्वा सिराश्च परिहृत्य लक्षणसम्पन्नमेव प्रकल्प्य आहरेदिति विज्ञायते।

**४.५.४५ भूमिजादिशिलानां मुखविवेकः**

**खि. ८.१७ - २०**

भूमिजानां तु सर्वासामधस्तान्मुखमुच्यते।।

पर्वतोपरि जातानां मुखमूर्ध्वमुदाहृतम्।
तत्पार्श्वे तु प्रजातानां तन्मुखं मुखमुच्यते।।

पादेषु तस्य जातानां पर्वतप्रेक्षणं मुखम्।
समुद्रान्तर्निविष्टानां मुखमूर्ध्वमुदाहृतम्।।

पाषाणानां नदीजानां जलागमनतो मुखम्।

**ज्ञा.२८.५४ ; य. ११.२ ;वि. १५.६८**

**४.५.४६ भूमिजादिशिलानां शिरआद्यङ्गविवेकः**

**स. १२.७ - १०**

अधोमुखाः शिलाः सर्वास्तस्मात्पार्श्वादथाङ्कयेत्।।

उन्नतस्तु शिरोभागः प्रवणे पाद उच्यते।
उन्नतप्रवणाभावे गौरवं तु यतः शिरः।।

शिरोभागं शिरः कृत्वा बिम्बेषु च पदे पदे।
शिरोमुखे तथा कार्ये बिम्बे चापि यथा शिला।।

एतौ स्पष्टौ तु विज्ञेयौ प्रशस्तां प्रतिमां प्रति।

**ज्ञा. २८.५४**

[ अत्र यत्रोन्नतिस्तत्र शिरो विद्यात् इत्येव निर्दिश्यत इति विशेषः।]

**वा.४**

[ अत्र काश्यपज्ञानकाण्डवत्। ]

**खि . ८.२०, २१**

[ अत्र शिलानां यत्र गौरवं तच्छिर इति,साकृतीनां शिलानाम् आकृतिशिरः शिर इति च निर्दिश्यत इति व्रिशेषः। ]

**४.५.४७ शिलानां पूर्वादिदिङ्मुखत्वानुरोधेन फलभेदः**

**खि. ८.२१, २२**

पूर्वग्रीवा तु जयदा शान्तिदा दक्षिणानना ।।

श्रीकरा पश्चिमग्रीवा शुभदा चोत्तरानना।

**ज्ञा.२८.५४**

**४.५.४८ शिलासङ्ग्रहणकालः**

**खि. ८.१ - ३**

अयने चोत्तरे कुर्याद्दक्षिणे वा त्वरान्वितः।।

मार्गशीर्ष (क) माघौ द्वौ निन्दितौ ब्रह्मणा पुरा।

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।।

ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।

**वा. ४.**

[अत्र यजमानानुकूलर्क्षे सुमुहूर्ते शुभे दिने इत्येव निर्दिश्यत इति विशेषः।]

**वि. १५.६८**

[ अत्र पूर्वपक्षे पुण्ये कर्तुरनुकूले नक्षत्रे इत्येव निर्दिश्यत इति विशेषः। ]

## ४.५.४९ शिलासङ्ग्रहणे शुभाशुभनिमित्तदर्शनम्

**खि. ८.३ - १२**

यजमानोऽथ तत्काले गुरुमाहूय पूजयेत्।।

यजमानो गुरुश्चैव निमित्तानि च लक्षयेत्।
श्वः कर्तास्मीति सङ्कल्प्य यजमानयुतो गुरुः।।
शुद्धं बहुज्ञं शास्त्रज्ञमरोगं मुक्तसंशयम्।
बलवन्तमुपायज्ञमानयेच्छिल्पिनं तदा।।

सम्पूज्य वस्त्राभरणैस्तेन कर्माणि कारयेत्।
आहृत्य सर्वान् सम्भारान् व्रजेच्छिल्पिजनैः सह।।

प्राङ्मुखोदङ्मुखो वापि मार्गेण सह साधनैः।
गमने च तथा धीमान् निमित्तान्युपलक्षयेत्।।

'गच्छाहर भरेक्षस्व गृहाणे' मे ह्यशोभनाः।
'जीवस्व रम मोदस्व जय शाधि प्रभो कुरु'।।

इत्याद्यर्थयुता वाचो यास्ताः सर्वाः शुभप्रदाः।
राजानं वृषभं कन्यां गजं रथतुरङ्गमौ।।

पूर्णकुम्भं सुरां वेश्यां भामिनीं शोभनं विदुः।
वायसो वामगः श्रेष्ठः कुर्वन् वै सुस्वरं भृशम्।।

कार्यसिद्धिकरं विद्धि दक्षिणे विघ्नकारणम्।
गौली दक्षिणतः श्रेष्ठा पश्चाद्वामे श्रुता यदि।।

प्रातः पैङ्गलिकं श्रेयः वामस्रोतो भवेद्यदि।
एवमादीनि चान्यानि निमित्तानि च लक्षयेत्।।

**स. १३.१ -७**

अथ बेराय वक्ष्यामि शिलासङ्ग्रहणं क्रमात्।
परीक्ष्य शुभनक्षत्रं शुभलग्नं पुरैव तु।।

आचार्यो यजमानश्च तद्दिने तत्परायणौ।
पूजयित्वा हरिं देवममितं चानपायिनम्।।

गरुडं च समावाह्य स्थण्डिले सम्यगर्चयेत्।
इममर्थं समुद्दिश्य कुर्याद् ब्राह्मणभोजनम्।।

शुभे मुहूर्त्ते सम्प्राप्ते देवेशं सम्प्रणम्य च ।
एवमेतत् परीक्षामः प्रसीद भगवन्निति।।

परीत्य मन्दिरं पश्चाच्छकुनान्यभिलक्ष्य च।
शुभानि यानि चोक्तानि गच्छेद्यत्र शिला भवेत्।।

अशुभं यत्र दृश्येत निमित्तं सन्निवृत्य च ।
कृत्वा तु शान्तिहोमं च पश्चाद्वै शिल्पिना सह।।

आचार्यः पुरतो गच्छेद्विष्णुर्मा पात्वितीरयन्।

**वा. ४**

**प्र. ७.३४ - ३८**

यस्मिन् देशे शिलास्तीति गच्छेन्निश्चितमानसः।
प्रयाणकाले शकुनाः शुभाः शुभफलप्रदाः।।

शुभवाक्योदकुम्भास्थिगजराजद्विजोत्तमाः।
चर्ममांसदधिक्षीरदुन्दुभिध्वनयः शुभाः।।

अशोभनांस्तथा वक्ष्ये शपमाना यथायति।
विकीर्णकेशा विप्रैक्यघृततैलाक्तदर्शनम्।।

रिक्तकुम्भनिरोधोक्तितैलभाजनदर्शनम्।
प्रयाणकाले नष्टान्तु (अष्टौ तु ?) विपरीतफलप्रदाः।।

शुभे प्रयाणं कर्तव्यं स्थित्वा शोभनलक्षणम्।

**४.५.५० शिलासङ्ग्रहणप्रकारः**

**स. १३.७ - ४५**

वने वा जलपार्श्वे वा गिरिपार्श्वत एव च।।

यत्र संलक्ष्यते युक्ता शिला सा शुभलक्षणैः।
तस्यास्तु दक्षिणे पार्श्वे प्रतीच्यां वा मनोरमे।।
अङ्गारं तर्पयित्वा तु रक्षां तत्र विधाय च।
खानयित्वा तु परितः शिलायाश्च यथार्हकम्।।

शिलां छित्वा समुद्धृत्य पार्श्वयित्वा तु तां क्रमात्।
रेखाबिन्दुकलङ्कादीन् लक्षयित्वा गुणान्विताम्।।

दोषहीनां विदित्वा तु युक्तां तामभिमान्य च ।
शिलापार्श्वे बलिं दद्याद्वनराजाय चोच्यते।।

उद्वास्य तत्र वसतो देशे देवा इति ब्रुवन्।
भूतयक्षपिशाचानां नागानां च यथादिशम्।।

बलिं दत्त्वा नमोन्तेन तत्तन्नाम्नैव तद्बलिम्।
पूर्वेद्युरेव शर्वर्यामुद्दिष्टदिवसाद् गुरुः।।

शान्तिहोमं ततः कुर्याद्देवीभ्यां च पृथक्पृथक्।
तत्तद्दैवत्यमन्त्रं च हुत्वा मन्त्रविचक्षणः।।

अङ्गहोमं च हुत्वा तु मूलहोमश्च हूयताम्।
साधनानि ततो नीत्वा होमस्योत्तरपार्श्वतः।।

तक्षकं च समाहूय शिल्पशास्त्रविशारदम्।
धान्यराश्युपरि न्यस्य ताडनीं गु (वु ?) लिकामपि।।

वस्त्रेणोपरि सञ्छाद्य तत्पार्श्वे शिल्पिनं तथा।
वस त्वमत्र चेत्युक्त्वा संविधाय गुरुस्ततः।।

तस्यैव दक्षिणे देशे कलशान् पञ्च विन्यसेत्।
धान्यराशौ क्रमेणैव कलशान् विधिना न्यसेत्।।

मृद्गन्धाक्षतपुष्पाम्बुकुशवारिषु पूरितान्।
देवीभ्यां च पृथक् चैव तत्पार्श्वे कलशान् न्यसेत्।।

वस्त्रेणोपरि सञ्छाद्य रक्षां सम्यग्विधाय च।
शान्तचक्रौ खगेशं च तस्य पार्श्वे समर्चयेत्।।

तस्य दक्षिणपार्श्वे तु पौण्डरीकं विधानतः।
अग्निं संसाध्य तस्मिन् वै बिल्वपत्रैर्घृताप्लुतैः।।

श्वेताब्जैः कुमुदैर्वापि विष्णुसूक्तपुरः सरम्।
मूर्तिमन्त्रैः क्रमेणैव सर्वासां पर्षदामपि।।

तत्तन्मन्त्रैश्च जुहुयादुदुत्यं चित्रमित्यपि।
ततः प्रतिसरं बध्वा तस्याश्चैव तु पश्चिमे।।

समास्तीर्य कुशाग्राणि मृगाजिनमथोपरि।
स्नात्वानश्नन् दिवा रात्रौ क्षीरं पीत्वा तदैव तु।।

आत्मानं तु भृगुं मत्वा मार्कण्डेयमथापि वा।
विष्णुर्मां पात्विति ध्यायन् रक्षां कृत्वात्मनः क्रमात्।।

सौवर्णयज्ञसूत्राद्यैर्भूषणैरपि भूषितः।
श्वेतवस्त्रोत्तरीयोऽसौ श्वेतमाल्यानुलेपनः।।

तस्मिन् शयन आचार्यः शयीत नियतात्मवान्।
इमं मन्त्रं जपन्नेवमासित्वा ब्राह्ममासनम्।।

आदिदेवं महादेवं जगन्नाथं जनार्दनम्।
दासस्य मे शुभान्यद्य सूचय स्वप्नतो मम।।

इत्युक्त्वा च हरिं ध्यायंस्ततः स्वापं च कारयेत्।
श्रीरूपं विष्णुबिम्बं वा पुष्पितं वा वनस्पतिम्।।

विद्वांसं ब्राह्मणं वापि शुद्धमन्यं वृषादिकम्।
पश्येत शुभमेव स्यात्प्रसन्नो भगवान् ध्रुवम्।।

अन्यथा हि खरोष्ट्रादीन् पश्येच्चेदशुभावहम्।
तस्यापि च पुनः शान्तिं हुत्वा शेषं समाचरेत्।।

ततः प्रभाते शुद्धात्मा स्नात्वा त्वहतवस्त्रधृत्।
शिलां प्रदक्षिणं कृत्वा प्रोक्षणैः प्रोक्षणं चरेत्।।

नवनीतेन चाभ्यज्य क्षालयेत् पञ्चगव्यकैः।
ततस्तक्षकमाहूय मानयित्वा तु तां शिलाम्।।

मानोन्मानप्रमाणानि तालगम्यक्रमेण तु।
अधोनालीप्रमाणं च मौलिमानं शिखामणेः।।

सर्वं संलक्ष्य मानं च किञ्चिन्न्यूनाधिकं तु वा।
मध्यसूत्रं तथा लम्बेत्पार्श्वसूत्रे च लम्बयेत्।।

मुखादिभागान् संलक्ष्य धातुरागैश्च रेखयेत्।
यथा लक्ष्यं भवेत् स्पष्टं तथा चिह्नं च कारयेत्।।

किञ्चिदप्यधिकं कृत्वा तालमानं च मानवित्।
एतयोः पार्श्वतश्चापि घनं नाहं च मानतः।।

विसृज्य तक्षकं पश्चात् स्थापितैः कलशैः क्रमात्।
स्नापयेत्तां शिलां छिन्द्याद्देवदेव्योरपि पृथक्।
ततश्च ताडनीं चापि उलिकामपि तत्क्षणात्।
सङ्गृह्य स्वयमाचार्यो विष्णुगायत्रिमुच्चरन्।।

उदुत्यमिति चोक्त्वा तु छिन्द्याच्चैवोत्तरामुखः।
स चापि तक्षकः सर्वं स्वशास्त्रोक्तं च कारयेत्।।

सर्वतश्छेदयित्वा तु व्यक्तं चिह्नं यथा भवेत्।
स्विष्टाकारं च जुहुयात्ततो हुतभुजि क्रमात्।।

आचार्यदक्षिणां दद्याद्यथोक्तां शक्तितोऽपि वा।
यजमानस्तु तत्काले तत्तत्कर्मकृतामपि।।
ततः शकटमारोप्य प्लवं वापि यथार्हतः।
उत्तानं च पुनः पादं समारोप्यालयं नयेत्।।

स्थापिते पथि रात्रौ तु चक्रशान्तौ समर्चयेत्।
एवमेव च गत्वा वै देवालयसमीपतः।।

अवरोप्याप्रमादेन भूमौ यन्त्रैरपि क्रमात्।

**खि.८.६६ - ९०**

शिलासङ्ग्रहदेशे तु तत्रैवोत्तरपार्श्वतः।
सम्भृत्य चैव सम्भारान् पूर्वेद्युर्होममाचरेत्।।

कुण्डं श्रामणकं कृत्वा आघारं विधिवद्यजेत्।
हुत्वा मेदिन्यादिमन्त्रैः पर्यग्निं तत्र कारयेत्।।

पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।
ये ते शतादिभिर्मन्त्रैर्हुत्वाग्निं च विसर्जयेत्।।

तस्य दक्षिणपार्श्वे तु कुर्यादौपासनं क्रमात्।
आघारं विधिवत्कृत्वा अदितेन्वादिभिः क्रमात्।।

परिस्तीर्य विधानज्ञो वैष्णवं जुहुयात् क्रमात्।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।।

जयादींश्चैव हुत्वा तु ऐन्द्रं च विधिपूर्वकम्।
यावान् वै प्रतिमायामः प्रक्षालनमथाचरेत्।।

विष्णुमभ्यर्च्य तत्रैव सप्तविंशतिविग्रहैः।

दिग्देवानर्चयित्वा तु अर्घ्यान्तं च यथाक्रमम्।।

वसन्तादिबलिं दत्वा क्रूरभूतबलिं ददेत्।
वस्त्रैराच्छाद्य परितो देवेशं सम्प्रणम्य च।।

सन्न्यसेत्तु परश्वादीन् वस्त्रस्योपरि च क्रमात्।
तस्य पश्चिमभागे तु दर्भैरास्तरणं चरेत्।।

आसीनो यजमानस्तु तस्योपरि विधानतः।
देवेशं मनसा ध्यात्वा इमं मन्त्रमुदीरयेत्।।

'ॐ नमः सकलेशाय सर्वभूतात्मने नमः।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः'।।

शताष्टवारं जप्त्वैवं प्रसन्नाय तवान्तिकम्।
स्वप्ने सर्वाणि कार्याणि हृदिस्थानीह शंस मे ।।

इति सम्प्रार्थ्य देवेशमेकाग्रमनसा शुचिः।
मन्त्रं शताष्टवारं च जप्त्वा शयनमाविशेत्।।

ज्वलन्तं च श्रिया युक्तं यदा पश्यति पर्वतम्।
प्रवृद्धशिखरं तत्र काञ्चनद्रुमसंयुतम्।।

फुल्लपुष्पसमायुक्तपल्लवद्रुमशोभितम्।
तदा स्वप्नं सुखं विन्द्यात् क्रिया भवति पुष्टिदा।।

विपरीतो यदि स्वप्नो महाशान्तिः सुहूयताम्।
एवं कृत्वा तु तद्रात्रौ रात्रिशेषं व्यपोहयेत्।।

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।

स्नात्वा स्नानविधानेन स्वस्तिसूक्तं समुच्चरन्।।

प्रदक्षिणं ततः कृत्वा यज्ञालयमुपाव्रजेत्।
आसनं ब्राह्ममास्थाय अग्निमानम्य चादरात्।।

कूर्चेन तोयमादाय परिषिच्य च पावकम्।
साग्रं पालाशसमिधं घृताक्तं परिगृह्य च ।।

वैष्णवं मन्त्रमुच्चार्य जुहुयादग्निमध्यमे।
विष्णुसूक्तं च हुत्वा तु जयादींश्च ततः परम्।।

यद्देवादींस्ततो हुत्वा ब्राह्मं रौद्रं तथैव च।
व्याहृत्यन्तं च हुत्वा तु अग्निं सम्यक् प्रणम्य च ।।

अन्तहोमं ततो हुत्वा पश्चादग्निं विसर्जयेत्।
पश्चाद्देवान् विसृज्यैव आदित्यं सम्प्रणम्य च ।।

उलिकादि च सङ्गृह्य प्राङ्मुखः प्रयतात्मवान्।
सुवर्णेनैव कृत्वा तु घनयुक्तमनिन्दितम्।।

विष्णुसूक्तेन देवस्य दिक्षु प्रागादि ताडयेत्।
अन्येषामपि देवानां तत्तन्मन्त्रेण ताडयेत्।।

पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।
शिल्पिना छेदयेत्तां तु ऊहापोहविधानतः।।

**खि.८.१०५ - १०७**

आहरेत प्रयत्नेन तत्तन्मानसमायुताम्।
अङ्कयेच्चापि सर्वत्र अङ्गोपाङ्गविनिर्णयम्।।

एवं सङ्कल्प्य तं बिम्बमारोप्य[1] शकटे ततः।
सर्ववाद्यसमायुक्तं देवालयमुपाव्रजेत्।।

आलयात्पुरतो वापि उत्तरे वा मनोरमे।
शिलां तत्र तु विन्यस्य प्रतिमां कारयेत्ततः।।

**वि. १५. ६८, ६९**

वने, वनपार्श्वे जलपार्श्वे वा शिलां वीक्ष्य, परितस्तृणगुल्मलतादीनि संशोध्य, तदुत्तरपार्श्वे सूत्रोक्तविधिना वास्तुहोमं हुत्वा, पर्यग्निं कृत्वा, पञ्चगव्यैः पवमानाद्यैः सम्प्रोक्ष्य, द्विप्रस्थैस्तण्डुलैश्चरुं पक्त्वा गुडदधिघृतलाजैर्युक्तं शिलायाः पार्श्वे दक्षिणे वनराजायेति वाम देशाधिपतय इति, परितः प्रागादीशानान्तं सर्वेभ्यो देवेभ्यो यक्षेभ्यो विद्याधरेभ्यो राक्षसेभ्यः पिशाचेभ्यो नागेभ्यो गन्धर्वेभ्यः अष्टादशगणेभ्यश्चेति पूर्वमुदकं पुष्पं बलिमुदकं च दत्वा, तत्रस्थान् शीघ्रं व्रजतेति परितः ( शीघ्रं ) खनित्वा, शिल्पिना सार्धमानीय, शुद्धोदकैरभिषिच्य, आचार्य उत्तराभिमुखो भूत्वा प्राणायामं कृत्वा आत्मसूक्तं महीसूक्तं च जप्त्वा समाहितो देवं ध्यायन्, हस्ताभ्याम् 'इदं विष्णु' रिति मन्त्रेण शिलाग्रहणं कृत्वा, उलिकां ताडनीमप्यादाय, विष्णुगायत्रीं ' चित्र देवाना' मित्युक्त्वा मूर्ध्नि पार्श्वयोः पादे च किञ्चित् छित्वा शिल्पिनमाहूय विधिना मानयित्वा किञ्चिदप्यधिकं हेयशिलां छेदयित्वा प्लवगे शकटे वा शिलामारोप्य, अप्रमादेनाऽऽलयमावेश्य कर्ममण्डपे न्यस्य बेरं मानोन्मानाद्यैः लक्षणोपेतं स्थानकादिभेदेष्वेकमार्गेण साङ्गोपाङ्गावयवमत्यर्धावयवं वा सर्वत्राहीनं सुन्दरं चित्रं चित्रार्धं वा कारयेत्।

**य.११.६ - १४**

---

1. बिम्बनिर्माणार्थशिलामिति यावत्।

**वा. ४**

वनेऽद्रिनद्यास्तीरे वा संलक्ष्य मतिमान् क्रमात्।
त्वां खनामीति उच्चार्य परितस्तत्र खानयेत् ।।

शिलान्तमवटादूर्ध्वे गृहीत्वा मन्त्रवित्तमः।
उलिकाताडनं चैव शिलापार्श्वेऽधिवासयेत्।।

तस्य कुण्डं प्रकुर्वीत स्थण्डिलं वात्र कारयेत्।
मूलहोमाङ्गहोमौ च हुत्वा सूत्रोक्तमार्गतः।।

कलशैः पञ्चभिः स्नाप्य स्थापयित्वा यथाक्रमम्।
मृद्गन्धाक्षतपुष्पाम्बु कुशतोयान्तमाचरेत्।।

एवंक्रमेण देवीभ्यां पृथक् चैव समाचरेत्।
शिलापार्श्वे बलिं दद्यात् वनराजाय चेत्युत।।

भूतयक्षपिशाचानां नागानां च यथादिशम्।
तन्नामपूर्वं यत्नेन बलिं दत्वा प्रयत्नतः।।

पश्चात् सन्ताडनीं गृह्य उलिकां तत्र योजयेत्।
विष्णुसूक्तं समुच्चार्य शिलां तत्रैव ताडयेत्।।

पश्चात् तक्षकमाहूय सर्वं छित्वा समाहितः।
तां शिलां यन्त्रमारोप्य नीत्वा ग्रामप्रदक्षिणम्।।

पश्चाद्यन्त्राद् व्यपोह्यैव निधायैव तु मण्डपे।
ऊर्ध्वमानादिकं सर्वं मानोन्मानक्रमं तथा।।

दशतालक्रमेणैव प्रभामूलविभागशः।

गौतमीयोक्तमार्गेण सर्वं कृत्वा तु बुद्धिमान्।।

अथवा कारयेद्विद्वान् अत्र्युक्तक्रममाचरेत्।
परीक्ष्य च शुभं चैव षट्शुभं तत्र कारयेत्।।

**प्र. ७.३८ - ४३**

शिलां प्राप्य शुभे स्थाने वास्तुहोमं समाचरेत्।।

वैष्णवं पौरुषं सूक्तं श्रीभूसूक्तं तथैव च।
परिषेकं ततः कृत्वा कलशान् पञ्च सुन्यसेत्।।

मृद्गन्धाक्षतजप्यांश्च सर्वौषध्युदकं तथा।
संस्थाप्याभ्यर्च्य पाद्याद्यैस्तत्तद्देवान् समर्चयेत्।।

अभिषिञ्चेत् शिलां सूत्रे (?) मुहूर्ते करणान्विते।
अतो देवादिमन्त्रेण शिलां छित्वा विचक्षणः।।

अधोभागं मुखं तत्र शिर ऊर्ध्वं प्रकल्पयेत्।
पूर्वतश्चोत्तरे वाथ शिरोभागं प्रकल्पयेत्।।

मुखं पृष्ठं तथा पादं पार्श्वं चैव शिरस्तथा।
लाञ्छयित्वा विधानेन ततस्तक्षणमाचरेत्।।

## ६. दारुसङ्ग्रहणम्

### ४.६.० वृक्षत्रिविधत्वं पुंवृक्षादिभेदेन

**य.१२.४**

पुंस्त्रीनपुंसकाश्चेति त्रिधा स्युस्तरवो बुधाः।

**वि.१७.७८**

### ४.६.१ पुंवृक्षः

**य. १२.५**

अनेकशाखासंयुक्तं सुवृत्तं त्वार्जवान्वितम्।
पुंवृक्षं तं विजानीयात् ।।

**वि.१७.७८**

### ४.६.२ स्त्रीवृक्षः

**य . १२.५, ६**

स्थूलमूलं कृशाग्रकम्।
स्त्रीवृक्षं[1] ।

**वि. १७.७८**

### ४.६.३ नपुंसकवृक्षः

**य. १२.६**

कृशमूलं यन्नपुंसकमुदाहृतम्।

**वि. १७.७८**

---

1 विजानीयादिति पूर्वेणान्वयः

## ४.६.४ पुंवृक्षोपयोगविषयः

**वि. १७.७८**

पुंवृक्षेण पुंबेरम्।

**य. १२.४**

## ४.६.५ स्त्रीवृक्षोपयोगविषयः

**वि.१७.७८**

स्त्रीवृक्षेण स्त्रीबेरं कारयेत्।

**य. १२.४**

## ४.६.६ नपुंसकवृक्षसङ्ग्रणनिषेधः

**वि. १७.७८**

नपुंसकं वृक्षं न गृह्णीयात्।[1]

## ४.६.७ ध्रुवबेरयोग्यवृक्षभेदाः

**स. १५.१ - ३**

अथातः सम्प्रवक्ष्यामि बेरार्थं दारुसङ्ग्रहम्।
खादिरं चासनं वाथ सालं वा तिमिशं तथा।।

चन्दनं चम्पकं वाथ बन्धूकं शाकमेव वा।
शुद्धदेशे समुद्धूतमृजुं परिणतं शुभम्।।
निर्दोषं गुणभूयिष्ठं दृष्ट्वा कर्म समारभेत्।

**प्र. ८.२८ - ३०**

------------- दारुसङ्ग्रहणं ततः।।

---

1 बेरनिर्माणार्थमिति प्रकरणाल्लभ्यते।

चन्दनं खदिरं तालमसनं रक्तचन्दनम्।
राजानं चिरिबिल्वं च अशोकं स्तिमितं तथा।।
खादिरं धन्विनं चैव शिरीषं पद्मकं तथा।
इत्येवमादयो वृक्षाः गृह्यन्ते बेरकर्मणि।।

**वि. १७.७८**

खदिरासनतिमिशमीचन्दनचम्पकमधूकजातिवृक्षाश्चान्ये स्निग्धाः साराः शुभवृक्षाश्च सस्यक्षेत्रसमीपोत्पन्नाः पद्मोत्पलकुमुदवत्तटाकसमीपजाता याज्ञिका द्रुमाः, तुलसीवृक्ष ( कुशपुष्प) समीपजाताश्च वृक्षाः सङ्ग्राह्याः

**य. १२.१, २**

**ज्ञा. २७.५२**

बहुपत्रशाखापुष्पफलाढ्यान् ऋज्वव्रणान् अकोटरान् वृक्षान् दृढतरमूलानालोक्य तत्रातिदृढतरं उक्तलक्षणसम्पन्नमेकमादाय ------------------

**ज्ञा. २७.५४**

खदिरासनसालसुवर्णानिलार्जुनाशोकमधूकवाकसुरवर्तिनिम्बदलित्थवकुलकन्दलि-वञ्जुलाश्चेत्येते सारदारवः सर्वकार्येषु ग्राह्याः भवन्ति। तानेव स्थूणाफलकोत्तर-बोधिकाद्वारपट्टिकार्गलसालभञ्जिकाद्यर्थं संशोधितानृजुवृक्षांस्तक्षयित्वा आहत्योच्छिष्टफेनतुषोषरधिंजावर्चः (?) प्रभृतीन् परिहृत्य शकटैः वैवधिकैरन्यैः महिषैः वृक्षैर्वा वाहयित्वा आघोष्य देवस्थानं गत्वा तत्र निधापयेदिति विज्ञायते।

### ४.६.८ ध्रुवबेरादियोग्यवृक्षभेदाः

**खि. ८.१२४ - १२९**

अत ऊर्ध्वं प्रवक्ष्यामि विशेषांस्तरुषु क्रमात्।।
असनं खदिरं चैव चम्पकं चार्जुनं तथा।

धवजं बर्बरं चैव मङ्कणं च नमेरुकम्।।

अच्चं च ? लाङ्गलं चैव बहुपुष्पं तमालकम्।
गण्डीयं कुकरं चैव मधूकं वकुलं तथा।।

पाटलं पनसं चैव तिन्त्रिणी सारमेव वा।
अश्वत्थं चूत ----- धातकीं वाहरेद्बुधः।।

प्रतिमार्थं तरुं कश्चित् कश्चित् स्थूणार्थमेव च ।
कवाटार्थं च कूटार्थमन्यार्थं चाहरेत्क्रमात्।।

एतेषां सारमाहृत्य युक्त्या सर्वं समाचरेत्।
शिष्टं त्वाष्ट्रप्रयोगेण कारयेत्तु विचक्षणः।।

### ४.६.९ ध्रुवबेरायोग्यदारु उपलब्धिस्थानाद्यनुरोधेन

**प्र. ८.३१ - ३७**

चण्डालस्थानपार्श्वे तु दुष्टप्राणिनिषेविते।
मातृस्थान समुद्भूते? श्मशाने देवमन्दिरे।।

कूपवापीतटाकान्ते मुनिवासे सहालये।
योगस्थानपदे धर्मशालायां मार्गमध्यमे।।

प्रेतभूतालये चोरसत्त्वानां च निषेविते।
प्रस्थानशलभस्थाने कल्पास्थिनिलयेऽपि च ।।

साष्टाभूतसमुद्भूतदेशे ? रौणिकदेशके ?।
एवंस्थाने समुद्भूतं न गृह्णन्ति द्रुमं ततः।।

पादानपादनं तर्धि मशनेर्याति पीडनम्।

असाक्षिकं सर्पनिलयं बहुवल्मीकसंयुतम्।।

सुजनं तरुणं रूक्षं बहुपक्षिसमाकुलम्।
अस्थिरं बहुचक्रं च सुशाखं चैकशाखिनम्।।

कर्मान्तरगृहीतं च कर्मान्तरप्रयोजनम्।
एवमीदृग्विधं वृक्षं वर्जयेद् बेरकर्मणि।।

**वि. १७. ७८**

पुष्पफलविस्तीर्णाः क्रिमिदष्टाः जन्तुयुता अग्निदग्धा वाताहता जीर्णाः सकोटरास्त्वचाहीना भिन्ना अनेकपक्षिनिवासा वल्मीकसङ्कटाः सर्पवासाः देवायतनस्थाः श्मशानचण्डालवाससमीपस्था अनुक्तस्थानस्थाश्चाग्राह्याः।

**य. १२.३**

**ज्ञा. २७.५२**

देवायतनमार्गश्मशाननदीतीरोद्यानजान् सीमगान् चैत्यगान् बालवृद्धातुरवृकपक्षिसरीसृपयक्षराक्षसपिशाचगन्धर्वोरगाश्रितान् वल्लीनद्धान् कन्यालालितान् हस्तिवाय्वशनिशस्त्रभग्नदग्धान् स्वयं शुष्कान् अन्त्यजाश्रितान् ग्रामाभ्यन्तरजान् एवमादीन् हित्वा---------

## ४.६.१० दारुसङ्ग्रहणे शुभाशुभनिमित्तपरीक्षणम्

**वि.१७.७८, ७९**

आचार्यो यजमानश्च साधनैर्होमसम्भारैः शिल्पिभिः सार्धं प्राङ्मुख उदङ्मुखो वा वनं गत्वा निमित्तानि संलक्षयेत्। क्रौञ्चचक्रिवायसपिङ्गलाक्ष चकोरकपोतहंसकृकलासादयो दक्षिणगाः शुभा अभ्युदयकराश्च। चाषः श्येनश्चटिट्टिभाःवामगाः सिद्धिदाः। गृहगौलीकौशिकक्रोष्टुपिङ्गलाक्षवनकुक्कुटाद्या वामतः सर्वे सिद्धिप्रदाः। प्रभामिनीवैष्णवध्वजच्छत्रपूर्णकुम्भशुक्लवसनपुष्प-

गजवृषगोमिथुनदधिपयोरुधिरमांसमधुभाण्डगर्भिणीसुरावेश्या यदि दृश्यन्ते तच्छुभकरं भवति। इत्येवं शिलासङ्ग्रहणकालेऽपि ज्ञेयम्।

### ४.६.११ दारुसङ्ग्रहणे आयुधपूजनम्

**ज्ञा. २७.५२**

अथ दारुसङ्ग्रहणम्। श्वः कर्तास्मीत्याचार्यं समनुज्ञाप्य शिल्पिनं चैव वैवधिकादीनाहूय परशुलूनतक्षनीवकुठारटङ्कादीनाहृत्य संशोध्य शुद्धे देशे वस्त्रमाल्यानुलेपनैरलङ्कृत्य परशौ रुद्रं लूने भूतान् तक्षे महेन्द्रं नीवे यमं कुठारटङ्कयोः मृत्युं चाभ्यर्च्य आचार्यादीन् भोजयेत्।------- शस्त्रदेवान् पृथक् पृथक् सम्पूज्य-------।

### ४.६.१२ दारुसङ्ग्रहणप्रकारः

**ज्ञा. २७. ५२ - ५४**

ऋत्विग्भिस्सह शकुनान्युपलक्ष्य वनं प्रविश्य ------- वृक्षान् दृढतरमूलानालोक्य तत्रातिदृढतरमुक्तलक्षणसम्पन्नमेकामादाय तत्पार्श्वे मातृविघ्नवीराणां देशमुपकल्प्य शस्त्रदेवान् पृथक्पृथक् सम्पूज्य वृक्षस्य चतुर्दिक्षु वनस्पतिभ्यः कुमारीभ्यो वृक्षराजेभ्यः 'सर्वकामप्रदेभ्यो नम' इति बलिं दत्त्वा अग्नये वनराजाय सोमाय यमाय स्थूललक्षाय व्याधाय मृगरूपिणे वनस्पतिभ्यः कुमारीभ्यो वल्लीभ्यः कुसुमाय शलाटवे बृहत्त्वचे पुण्यायामिततेजसे सूर्याय सूर्यरूपाय शृङ्गिणे भूतरूपिणे नागहस्ताय दिव्याय त्रिहस्ताय विघ्नाय विघ्नरूपाय विनायकाय प्रसारिणे मुरुण्डाय न्यर्णाय नागेभ्यो भूतराजेभ्यश्चारणेभ्यो दिवाचरेभ्यो नक्तञ्चरेभ्यः सन्धिभ्यः सन्ध्याचरेभ्योऽप्सरोभ्यो यक्षेभ्यः कुमारीभ्यः सन्ध्याचरीभ्यः आसुरीभ्यो राक्षसीभ्यः पिशाचीभ्यो वन्याय स्थलचारिणे वृक्षदेवेभ्यः स्थानदेवेभ्यो

विद्याधरेभ्यो रूपिभ्यो मिथुनेभ्यः सुखेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वां, पर्यग्निं कृत्वा, सर्वेश्वरं जगन्नाथं चामुण्डं सर्वतश्चरं ब्रह्माणीं सरित्प्रियां वैशाखिनीं विश्वगर्भां वरदां जयन्तीं कालीं वक्रतुण्डं च व्याहृत्यन्तं घृतेनैव हुत्वा पुण्याहान्ते प्रतिसरं बध्वा पुष्पगन्धवस्त्राद्यैरलङ्कृत्य,

तरो गृह्णामि देवार्थं त्वां प्रसीद ममानिशम्।
गच्छन्तु देवताः सर्वाः प्रीताश्चैनं समाश्रिताः।।

इति वृक्षराजमामन्त्र्य आचार्यं शिल्पिनं च सम्पूज्य रात्रावेव यूथाधिपानपायिनावभ्यर्च्य ताभ्यां घृतमिश्रैः सर्षपैः हुत्वा तिललाज-सक्त्वपूपसम्पृक्तं बलिं भूतेभ्यस्तेभ्यो दद्यात् । प्रभाते स्नात्वा पुण्याहं वाचयित्वा घृतपूर्णपात्रं 'सोमाय नम' इति जलमध्ये क्षिप्त्वा 'सोमं राजान' मित्युदङ्मुखं छेदयेत्। तत्र प्राचीमुदीचीं वा शकला यदि गच्छेयुः महावृद्धिर्भवति। प्रतीच्यभिमुखा विघ्नकरा दक्षिणगा विपत्करा भवन्ति। अतः प्रतीक्ष्य सर्वाङ्गं छेदयेत्। प्रागग्रान् कुर्यात्।-------- शकटैः वैवधकैरन्यैः महिषैः वृषैर्वा वाहयित्वा आघोष्य देवस्थानं गत्वा तत्र निधापयेदिति विज्ञायते।

## ज्ञा. ४० . ७२ - ७४

शुभर्क्षे पूर्वोक्तगुणसम्पन्नं गुरुं स्रग्वस्त्राभरणादिभिरलङ्कृत्य अनुज्ञाप्य 'जितं त' इति भगवन्तं प्रणम्य 'प्रतद्विष्णुस्तवत' इति देवागारं प्रदक्षिणी-कृत्योक्तलक्षणसम्पन्नं शिल्पिनमम्बरादिभिरामन्त्र्य वास्याकुठारादीनाहृत्य शैषिकचक्रौ सप्तविंशतिभेदैरभ्यर्च्यालङ्कृत्य यानमारोप्य पूर्ववद् गत्वा उक्तलक्षणसंपन्नं द्रुममाश्रित्य संशोध्य 'वृक्षराजं देवावासं सुशाखिनं 'विरिञ्चिनिर्मित'मिति, एतस्योत्तरे अमितं पश्चिमे अनपायिनं परश्वादि 'भवते भवाये' त्युक्त्वा दारुचक्रान्तरे अभ्यर्च्य अमितांघ्रिपयोर्मध्ये अग्निं

समाधाय आघारान्ते अतो देवादि वैष्णवं रौद्रं ब्राह्मं कौबेरं मूलहोमं च हुत्वा भूतेभ्यो बलिं दत्वा सहस्रशीर्षादिना तरुमभिमन्त्र्य गुरवे दक्षिणां दत्वा पुण्याहं वाचयित्वा तन्मूलं 'सोमं राजान' मिति घृतेनालिप्य 'शन्नो देवी' रिति क्षीरेण च अर्घ्याचमने दत्त्वा आशीर्भिराघोष्य 'विष्णुस्त्वां रक्षत्वि' ति प्रतिसरं बद्ध्वा प्रभाते स्नात्वा बलिं प्रक्षिप्य पार्श्वे 'वृक्षराजाय देवावासाय सुशाखिने विरिञ्चिनिर्मिताय सुपत्राय सुपुष्पाय वनस्पतिभ्यो द्यावापृथिवीभ्यां स्वा' हेति व्याहृत्यन्तं हुत्वा' विष्णवे श्रीधराय वराहायोर्वीसन्धारणाय सर्वव्यापिने श्रियै हरिण्यै ख्यातीशाय चिरायुषे ब्रह्मणे स्थाणवे सर्वदर्शिने चक्रायामिताय देवेभ्यो ग्रहेभ्यो नागेभ्यःस्वाहेति व्याहृत्यन्तं हुत्वा अग्निं विसृज्य परश्वादीनभ्यर्च्य आदाय 'रुद्रमन्य-मित्यग्निमुपस्थाय' 'नमो वरुणः शुद्ध' इति जलेनाप्लाव्य प्रदक्षिणीकृत्य प्रत्यङ्मुखः स्थित्वा आत्मानमच्युतं ध्यात्वा 'भवते भवायेति' वृक्षस्य दक्षिणे, 'सोमं राजान' मिति पश्चिमे, 'नाथापालेत्युत्तरे', 'प्रससेति' प्राच्यां छेदयित्वा पतनादीनुपलक्ष्य मुखं पार्श्वं पृष्ठमिति ज्ञात्वा त्वगादीनुन्मुच्य सारमादाय' 'वसोः पवित्रमिति' करीषेणालिप्य ध्वजपिञ्छादिभिरलङ्कृ-त्याघोष्य रथादीनारोप्य आगारं गत्वा अमितानपायिनौ संस्थाप्य देवेशं प्रणम्य शुभाशुभं ज्ञात्वा शान्तिं हुत्वा आरभेतेति विज्ञायते।।

**वि. १७. ७९**

शुभे मुहूर्ते तं वृक्षमासाद्य परितस्तृणगुल्मलतादीन् संशोध्य अस्मिन् देशे 'वसन्त उद्वसतेत्युक्त्वा' शान्तिं वाचयित्वा वृक्षस्योत्तरपार्श्वे वास्तुहोमं हुत्वा वृक्षमूले पर्यग्निकरणं कृत्वा, पञ्चगव्यैः समभ्युक्ष्य, पुण्याहं वाचयित्वा, चरुं पक्त्वा, तिलचूर्णसक्तुमुद्गनिष्वावयुतं, वृक्षमूले 'वनराजाये' ति परितः प्रागादीशानान्तं 'वनस्पतिभ्यो वनदेवताभ्यो भूतेभ्यो,यक्षेभ्यः, पिशाचेभ्यो,

नागेभ्यो, विद्याधरेभ्योऽष्टादशगणेभ्यश्चेति पूर्वमुदकं पुष्पं बलिमुदकं च दद्यात्। 'अस्तु तृप्ति' रित्युक्त्वा आचार्यं सम्पूजयेत्। आचार्यः प्राङ्मुख उदङ्मुखो वा 'इदं विष्णु' रिति हस्ताभ्यां द्रुमं सङ्गृह्य श्रीभूम्यादीनां तत्तन्मन्त्रेण दारुं सङ्गृह्य परशुमादाय विष्णुगायत्रीं, ' सोमं राजानं ' च जपन् प्रागादिचतुर्दिशं छित्वा,पश्चात् तक्षाणमाहूयाभिपूज्य सर्वं छेदयेत्। महादिक्षु पतनं श्रेष्ठं, विदिक्षु पतनं मध्यमम्, अन्यासु दिक्षु अधमं यथोचितं छित्वा ऊर्ध्वभागमुखं पार्श्वादि चाङ्कयेत्। यजमान आचार्यादिभ्यो दक्षिणां दत्वा तं वृक्षं शकटे समारोप्य नरैर्वाहयित्वा आलयमाविश्य कर्ममण्डपे संस्थाप्य शोषयित्वा प्रतिमाविधानेनात्वरेण कारयेत्।

**स. १५.४ - १४**

वृक्षमूले बलिं दद्याद्वनराजाय इत्यतः।
उद्वास्य तत्र वसतो यस्मिन् देशे इति ब्रुवन्।।

शान्तिहोमं ततो हुत्वा पुण्याहं तत्र वाचयेत्।
शिलासङ्ग्रहणोक्तेन विधिना कलशान् न्यसेत्।।

आत्मप्रतिसराबन्धः शयनं चात्मरक्षणम्।
स्वप्नसन्दर्शनं होमं सर्वं पूर्ववदाचरेत्।।

ततः प्रभाते शुद्धात्मा स्नात्वा चाहतवाससा।
वृक्षं प्रदक्षिणं कृत्वा प्रोक्षणैः प्रोक्षणं चरेत्।।

सङ्गृह्य परशुं पश्चाद् गायत्रीं वैष्णवीं जपन्।
सोमं राजानमित्युक्त्वा छिन्द्याच्चैवोत्तरामुखः।।

पश्चात्तक्षकमाहूय वस्त्राभरणभूषितम्।

परश्वधाद्यैस्तेनैव छेदयित्वा यथार्हकम्।।

भूमौ निपतिते वृक्षे चोर्ध्वभागो मुखं भवेत्।
संव्यपोह्य त्वचं पश्चात् सारं सङ्गृह्य तत्र च ।।

कलशैरभिषिच्याथ पञ्चभिः पूर्ववत्क्रमात्।
भूतयक्षपिशाचानां नागानां च बलिं ददेत्।।

अग्निं विसर्जयेच्चापि यथोक्तां दक्षिणां दिशेत्।
ततः स भृत्यैस्तद्दारु शकटोपरि यन्त्रितम्।।

यथोचितं समादाय स्वस्तिसूक्तं समुच्चरन्।
गत्वा जलेन संशोध्य शूलं सम्यक् प्रकल्पयेत्।।

दारवीं प्रतिमां वापि कुर्यादेकेन दारुणा।

**प्र. ८.४० - ५०**

एवं लक्षणसम्पन्नं द्रुमं गत्वा प्रसन्नधीः।
तन्मूले गोमयेनापि लेपयेच्चतुरश्रकम्।।

दिव्यलक्षणसंयुक्तं द्रुमं कृत्वा प्रदक्षिणम्।
'वनराजेभ्य' इत्युक्त्वा पायसं च बलिं ददेत्।।

परशुं च समादाय सेचयेत्पञ्चगव्यकैः।
मूलमन्त्रं जपित्वा तु ध्यायेद्विष्णुं परात्परम्।।

परशुं च समादाय भेदयेत्तु विचक्षणः।
पयः परिस्रवे तत्र शुभमेवं विधीयते।।

शोणितप्रस्रवे तत्र निर्दिशेदशुभं पुनः।

पूर्वं तु पतनं शस्तम् आग्नेय्यां तु भयावहम्।।

याम्यायां मरणं विद्यात् नैर्ऋत्यां व्याधिमादिशेत्।
पश्चिमे तु जनानां तु क्षुत्पिपासाविवर्धनम्।।

वायव्ये च भवेल्लाभः उत्तरे धनधान्यकम्।
ऐशान्यां शान्तिकं तत्र सर्ववृद्धिकरं नृणाम्।।

तद्वृक्षपतने काले कोशः सर्वो मृदुर्भवेत्।
सिंहव्याघ्रगजादीनां सर्वसम्पत्करं भवेत्।।
वृक्षाग्रं भेदयित्वा तु त्वचं सम्यग्व्यपोह्य च ।
प्रक्षाल्य वारिणा श्वेतचन्दनेनानुलेपयेत्।।

श्वेतवस्त्रेण संवेष्ट्य जयमङ्गलघोषणैः।
रथे वा शकटे वाथ स्कन्धे वाक्षिप्य वेशयेत्।।

ग्रामं प्रदक्षिणं कृत्वा स्वस्तिसूक्तं समुच्चरन्।
शिलष्टच्छाये समे देशे वालुकोपरि शाययेत्।।

**य. १२. ८ - १७**

आसाद्य वृक्षं परितस्तृणगुल्मलताः शुभम्।
संशोध्य 'यस्मिन् देशे' ति चोद्वास्यात्रस्थवासकान्।।

उत्तरे भूमियज्ञं च कृत्वा संशोध्य गोमयैः।
पुण्याहं वाचयित्वैव शुद्धान्नेन बलिं ददेत्।।

'वनराजाय' इत्युक्त्वा वृक्षमूले बलिं ददेत्।
प्रागादिदिक्षु वृक्षस्य 'वनस्पत' इति ब्रुवन्।।

'वनदेवताभ्यो' 'भूतेभ्यो' 'यक्षेभ्यो' 'नाग' एव च।
'पिशाचविद्याधरेभ्य 'श्च 'अष्टादशगणाय' च ।।

तत्तन्नाम्ना नमोन्तं च बलिं दत्वा क्रमेण तु।
'अस्तु तृप्ति' रिति स्तुत्वा तानुद्वास्य प्रणम्य च ।।

'इदं विष्णुर्विचक्रे' ति वृक्षं तमभिमृष्य च ।
कुठारमादाय हस्ताभ्यां विष्णुगायत्रिया बुधः।।

'सोमं राजान' मित्युक्त्वा छित्वा प्रागादि च क्रमात्।
ततस्तक्षकमाहूय छेदयेति नियोजयेत्।।

प्राग्दिक्षु पतितं भित्त्वा मुखभागं विभज्य च ।
यथोचितं भेदयित्वा दक्षिणां संददेद् गुरोः।।

शकटे तं समारोप्य धाम तत्सम्प्रविश्य च ।
शोषितेऽचिरकालेन प्रतिमां कारयेद् बुधः।।

शूलं च विधिनाऽऽहृत्य देव्यावपि तथा पुनः।
कारयेद्विधिना विद्वान् यावता शुभदर्शनम्।।

## ७. ध्रुवबेरकल्पनम्

**४.७.० ध्रुवबेरं त्रिविधं चित्रादिभेदेन**

**वि. १५.७०**

[1] तच्चित्रं चित्रार्धं चित्राभासमिति त्रिविधं भवति।

**ज्ञा. ५०.८७ ; स. १८.११**

**४.७.१ ध्रुवबेरं चित्रम्**

**स. १८.११,१२**

मानोन्मानप्रमाणेन व्यक्तं कुर्याद्विधानतः ।।

सर्वाङ्गमपि सन्दृश्यं यत्तच्चित्रं प्रकीर्त्यते ।

**ज्ञा. ५०.८७**

**वि. १५.७०**

[ अत्र षण्मानैस्सहितं चित्रम् इत्येव निर्दिश्यत इति विशेषः। ]

**४.७.२ ध्रुवबेरं चित्रार्धम्**

**स. १८.१२.**

सर्वाङ्गमर्धदृश्यं [2]यत्तदर्धं चित्रकं मतम्।

**ज्ञा. ५०.८७**

**वि. १५.७०**

[ अत्र नाहार्धसन्दर्शनमर्धचित्रमिति निर्दिश्यत इति विशेषः। ]

---

1 ध्रुवबेरम् ।          2 तत् चित्रार्धमिति यावत् ।

**४.७.३ ध्रुवबेरं चित्राभासम्**

**ज्ञा. ५०.८७**

पटकुड्यादिलेख्यं चित्राभासम्।

**स. १८.१३ ; अ. १२**

**वि. १५.७०, ७१**

[अत्र नाहोन्नतिभ्यां हीनं यत्तदाभासमित्यधिकतया निर्दिश्यत इति विशेषः।]

**४.७.४.० चित्राभासध्रुवबेरं द्विविधम् अचलादिभेदेन**

**वि. १५.७१.**

तदाभासं[1] द्विविधं भवति - अचलं चलमिति।

**४.७.४.१ चित्राभासध्रुवबेरम् अचलम्**

**वि. १५.७१.**

अचलं भित्तौ लिखितं ------- स्यात्। तस्मादचलमेव कारयेत्।

**४.७.४.२ चित्राभासध्रुवबेरं चलम्**

**वि. १५.७१.**

चलं पटलिखितं स्यात्।

**४.७.५ ध्रुवबेरम् उत्तमम्**

**स. १८. १३.**

उत्तमं चित्रमित्याहुः ।

**वि. १५.७०.**

**खि. ८. ११५**

[अत्र मानोन्मानप्रमाणैस्तु [2]युक्तमुत्तममुच्यते इत्येवं निर्दिश्यत इति विशेषः।]

---

1 चित्राभासमिति यावत्  2 ध्रुवबेरमित्यध्याह्रियते।

### ४.७.६ ध्रुवबेरं मध्यमम्

**स. १८. १३.**

-------------- चित्रार्धं मध्यमं विदुः।।

**वि. १५.७० ; अ. १२**

**खि. ८. ११५**

[ अत्र पादाधिकाश्रयोपेतं[1] मध्यमं तु शिलामयम् इत्येवं निर्दिश्यत इति विशेषः। ]

### ४.७.७ ध्रुवबेरम् अधमम्

**स. १८. १४.**

आभासमधमं प्रोक्तम् ।

**वि. १५.७०.**

**खि. ८. ११६**

[अत्र सर्वाङ्गाश्रयसंयुक्तमेकाश्रयमिहाधमम् इत्येवं निर्दिश्यत इति विशेषः। ]

### ४.७.८ चित्रध्रुवबेरोपादानद्रव्यम्

**अ. १२**

मृच्छिलादारुलोहं च रत्नजं चित्रमुत्तमम्।
सर्वलक्षणसम्पन्नं चित्रस्यैव तु चोच्यते।।

**वि. १५.७१.**

[अत्र मृच्छिलादारुलोहान्येव चित्रस्य उपादानद्रव्यत्वेन निर्दिश्यन्त इति विशेषः। ]

---

1 ध्रुवबेरमित्यध्याह्रियते।

**स. १८. १५ - १७**

[अत्र मृच्छिलाताम्राण्येव चित्रस्य उपादानद्रव्यत्वेन निर्दिश्यन्त इति विशेषः। ]

### ४.७.९ अर्धचित्रध्रुवबेरोपादानद्रव्यम्

**स. १८, २०**

शैलजे दारवे चैवमर्धचित्रं विधीयते।

**वि. १५.७१.**

**अ. १२**

[ अत्र शिलादारुरत्नानि अर्धचित्रध्रुवबेरोपादानत्वेन निर्दिश्यन्त इति विशेषः। ]

### ४.७.१० अर्धचित्रध्रुवबेरस्य निषिद्धोपादानद्रव्यम्

**वि. १५.७१.**

लोहजं मृण्मयम् ------- अर्धचित्रं न कारयेत्। कुर्याच्चेदाभिचारिकं भवति।

**स. १९. ५२, ६४**

**प्र. ९. ११.**

[ अत्र मृण्मात्रं निषिध्यत इति विशेषः। ]

### ४.७.११ चित्रध्रुवबेरम् उत्तमोत्तमम् उपादानद्रव्यानुरोधेन

**स. १८.१५.**

चित्रं चेच्छैलजं बिम्बमुत्तमोत्तममुच्यते।

### ४.७.१२ चित्रध्रुवबेरम् उत्तमम् उपादानद्रव्यानुरोधेन

**अ. १२.**

मृच्छिलादारुलोहं च रत्नजं चित्रमुत्तमम् ।

सर्वलक्षणसम्पन्नं चित्रस्यैव तु चोच्यते ।।

## ४.७.१३ चित्रध्रुवबेरकल्पनम्

### स. १८.१५ - १७.

चित्रे तु शैलजे बिम्बे ताम्रजे मृण्मयेऽपि च ।।

सर्वाण्यङ्गानि दृश्यानि भूषणान्यम्बराणि च ।

तत्तत्स्थाने प्रकुर्वीत सर्वाण्यपि विधानतः।।

सर्वसौन्दर्यसंयुक्तं शिल्पिभिः कारयेद् बुधः।

## ४.७.१४ अर्धचित्रध्रुवबेरकल्पनम्

### स. १८.२०, २१

शैलजे दारवे चैवमर्धचित्रं विधीयते।

सर्वाङ्गमर्धसन्दृश्यमर्धमेव समाचरेत्।।

तद्भूषणानि सर्वाणि चार्धदृश्यानि कारयेत्।

## ४.७.१५ चित्राभासध्रुवबेरकल्पनम्

### वि. ६०.३८६

[1]तेषां मानाङ्गुलेन सप्ताङ्गुलात् द्व्यङ्गुलमानेषु इष्टमानं विनिश्चित्य, पश्चात्तदुक्ततालविभागेन साङ्गोपाङ्गतत्तद्वर्णाम्बराभरणाद्यैर्युक्तं नयनानन्दनं समालिख्य------------।

1 आलेख्यदेवानाम्

### ४.७.१६ चित्राभासध्रुवबेरस्योपयोगः

**स. १८.१४.**

------------------- आभासे तु न चार्चयेत् ।

दान (ध्यान ?)होमजपेष्वेव भावनार्थमिदं स्मृतम् ।।

### ४.७.१७ चित्रध्रुवबेरार्चनफलम्

**वि. १५. ७१.**

बेरे चित्रे अर्चनम् ऐहिकामुष्मिकफलप्रदम् ।

### ४.७.१८ अर्धचित्रध्रुवबेरार्चनफलम्

**वि. १५.७१.**

अर्धचित्रे अर्चनं केवलमामुष्मिकफलप्रदम् ।

### ४.७.१९ चित्राभासध्रुवबेरार्चनफलम्

**वि. १५.७१.**

आभासेऽर्चनं ऐहिकफलप्रदम् ।

### ४.७.२० ध्रुवबेरस्य पञ्चविधत्वम् उपादानद्रव्यानुरोधेन

**प्र. ७.१२,१३**

शैलजं रत्नजं चैव धातुजं दारवं तथा ।।

मृण्मयं स्यात्तथैवेति पञ्चधा बेरमुच्यते ।

### ४.७.२१ ध्रुवबेरोपादानद्रव्यम्

**स. १०.५६, ५७; २१.११**

विधिना ध्रुवबेरं तदुक्तद्रव्येण चैव हि ।।

ताम्रेण शिलया वापि दारुणा वापि कारयेत्।
अथवा ध्रुवबेरं तु मृण्मयं कारयेत् क्रमात्।।
--------------------------------।
शैलजं मृण्मयं वापि दारवं वा ध्रुवं तथा।।

**अ.१२.**

[ अत्र ताम्रस्थाने रुक्मं निर्दिश्यत इति विशेषः। ]

**नि.१३.**

[ ताम्रस्थाने लोहं निर्दिश्यत इति विशेषः। ]

**वि.१५.६९ ; १६. ७५**

[ अत्र इष्टका अधिकतया निर्दिश्यत इति विशेषः। ]

**४.७.२२ शैलजध्रुवबेरस्य चतुर्विधत्वं श्वेतादिभेदेन**

**प्र. ७.१३,१५**

चतुर्विधं तु शैलं स्यात् ---------।।
श्वेतं रक्तं तथा पीतं कृष्णं चैव चतुष्टयम्।
शैलजं भेदमाख्यातम् -------------।।

**४.७.२३ रत्नजध्रुवबेरस्य सप्तविधत्वं माणिक्यादिभेदेन**

**प्र. ७.१३, २३, २४**

-----------------सप्तधा रत्नजं तथा ।।
-------------------------------- ।
माणिक्यं च प्रवालं च वैदूर्यं स्फटिकं तथा ।।
मरकतं पुष्यरागं च नीलं चैतेषु रत्नजाः ।।

## ४.७.२४ धातुजध्रुवबेरोपादानद्रव्यभेदाः

**ज्ञा. ५६.९८**

सुवर्णरजतताम्रकांस्यत्रपुसीसारकूटवृत्तलोहपित्तलायांसि लोहभेदा भवन्ति।

**प्र.७.१४, २७**

अष्टधा धातुजं प्रोक्तम् ---------- ।

------------------------------।।

हैमं रौप्यं तथा ताम्रं कांस्यं चैवारकूटकम्।

आयसं सीसकं चैव त्रपुसं चेति धातुजम्।।

## ४.७.२५ दारुजध्रुवबेरस्य षोडशविधत्वं देवदार्वादिभेदेन

**प्र.७.१४.३० - ३२**

---------------- दारुजं षोडशोच्यते।

-------------------ततो दारुजमुच्यते।

देवदारुः (रुं ?)शमीवृक्षं पिप्पलं चन्दनं तथा।।

असनं खदिरं चैव वकुलं शङ्खिवातनम्।

मयूरपद्मडुण्डूककर्णिकारं तथैव च।।

निम्बूकाञ्जनिका (के ?) चैव प्लक्षमौदुम्बरं तथा।

[1]एतैर्वर्ज्यास्तु चत्वारो द्विजातिक्रमयोगतः।।

---

1 एतैर्वर्ज्यास्तु चत्वारो इतीदमनन्वितमिव भाति। "एते ग्राह्यास्तु चत्वारो द्विजातिक्रमयोगतः" इति पाठः स्याद्वा इत्यालोच्यते। तदा षोडशसु वृक्षेषु ब्राह्मणादिभिः चतुर्भिः क्रमेण चत्वारश्चत्वारो ग्राह्याः इत्यर्थः स्यात्।

**४.७.२६ दारुजध्रुवबेरस्यैकदारुकृतत्वनियमः**

**स. १३.५५**

दारवप्रतिमां कुर्याद्दारुणैकेन[1] बुद्धिमान्।।

**४.७.२७ दारुजध्रुवबेरस्य अवस्थाननियमः**

**स. १३, ५६**

शयानं दारवं बेरं न कुर्यादिति केचन।

**४.७.२८.० मृण्मयध्रुवबेरस्य द्विविधत्वम् अपक्वादिभेदेन**

**स. १९.६६**

मृण्मयं द्विविधं प्रोक्तमपक्वं पक्वमित्यपि।।

**प्र. ७.३३; ९.१५**

**४.७.२८.१ मृण्मयध्रुवबेरम् अपक्वम्**

**स.१९.६७**

[2]पूर्वोक्तं मृण्मयं यत्तदपक्वमभिधीयते।

**प्र.९.१५**

**४.७.२८.२ मृण्मयध्रुवबेरं पक्वम्**

**स.१९.६७**

मृदा कृत्वाऽग्निना दग्धं यत्तत् पक्वमितीरितम्।।

**प्र. ९.१६**

---

1 एकपदम् अखण्डवाचकम्। 2 शूलादिघटितम्।

### ४.७.२९ मृण्मयध्रुवबेरस्य अपक्वत्वनियमः सर्वदेवविषये

**स. १९.६८, ६९**

अपक्वं मृण्मयं विष्णोः कारयेत विधानतः।

यदि पक्वं च कुर्याच्चेत् सर्वनाशकरं भवेत्।।

सर्वेषामपि देवानामपक्वं बेरमुच्यते।

**प्र. ९.१६**

[ अत्र विष्णोरेव अपक्वं मृण्मयं बेरं कारयेदिति इति विशेषः। ]

### ४.७.३० मृण्मयध्रुवबेरस्य पक्वत्वनियमः पिशाचविषये

**स. १९.७०**

पिशाचानां च सर्वेषां पक्वमेवेति कीर्त्यते।।

### ४.७.३१ पक्वापक्वोभयविधमृण्मयध्रुवबेरस्य योग्या देवता

**स. १९.६९, ७०**

ज्येष्ठायाश्चापि कुर्याच्चेदपक्वं पक्वमेव वा।।

वक्रतुण्डस्य शास्तुश्च पक्वं वाऽपक्वमेव च।

### ४.७.३२ ध्रुवार्चाबेरोपादानद्रव्यम्

**वि. १५.६९, ७०**

ध्रुवार्चाबेरं चेत् ताम्रजं शैलं वा कुर्यात्।

**क्रि.५. ७८, ७९**

[ अत्र शैलमित्यस्य स्थाने वर्णहीनं शिलामयमिति, ताम्रजस्थाने लौहमिति च निर्दिश्यत इति विशेषः। ]

**य. ११.१७**

[ध्रुवार्चा चेद् ध्रुवं शैलं कुर्यादन्यं विवर्जयेत्। ]

**४.७.३३ ध्रुवार्चाबेरस्यावस्थाविधिः**

**वि. १५, ६९**

ध्रुवार्चा चेत् स्थानकमासीनं यानकं वा सर्वाङ्गसम्पूर्णं सुव्यक्तं कारयेत्।

**४.७.३४ ध्रुवार्चायामाभासार्चननिषेधः**

**वि. १५.७१.**

ध्रुवार्चा चेदाभासार्चनं न कुर्यात् । चित्रं चित्रार्धं वा कृत्वा प्रतिष्ठाप्यार्चयेत्।

**य. ११.१८.**

[ अत्र चित्रं वा अर्धचित्रं वा कारयेत्तद् ध्रुवार्चनम् इत्युक्त्या अर्थात् आभासार्चनं निषिध्यत इति विशेषः। ]

**४.७.३५ ध्रुवबेरोपादानद्रव्यं यजमानवर्णानुरोधेन**

**स.१८.१८,१९**

शैलजं ध्रुवबिम्बं तु ब्राह्मणानां विशिष्यते।
ताम्रजं क्षत्रियाणां च वैश्यानां मृण्मयं तथा।।

शूद्राणां दारवं प्रोक्तं वर्णानामप्यनुक्रमात्।
सर्वेषां शैलजं श्रेष्ठं मृण्मयं चेति केचन।।

**नि.१३**

[अत्र भूपानां लोहजमिति निर्दिश्यत इति विशेषः। ]

**४.७.३६ ध्रुवबेरोपादानद्रव्यनियमः शिलालयविषयकः**

**स.१९.३९, ४०**

शिलालये ध्रुवं बेरं शिलयैव विधीयते।।

ताम्रेण वा प्रकुर्वीत ध्रुवबेरं शिलालये।
दारवं मृण्मयं वापि यदि कुर्याद्विनश्यति।।

**अ. ११ ; खि.८.१२३, १२४ ; य. १२.५१**

**४.७.३७ ध्रुवबेरोपादानद्रव्यम् इष्टकाविमानविषये**

**स. १९.४१**

इष्टकाभिर्विमानं चेच्छैलजं ताम्रजं तु वा।
मृण्मयं दारवं वाथ ध्रुवबेरं च कारयेत्।।

**अ.१९ ; य.१२.५२**

**४.७.३८ ध्रुवबेरोपादानद्रव्यं तृणाच्छन्नमृण्मयालयविषये**

**अ. ११**

मृण्मये तु तृणाच्छन्ने लोहजं स्थापयेत्तथा।।

कूटागारे तथा धीमान् शिलाशूलादिभिर्विना।
अथवा मृण्मये धीमान् तृणाच्छन्ने ध्रुवार्चनम्।।

जङ्गमं स्थावरं वाथ स्थापयेद्विधिचोदितम्।
जङ्गमे कौतुकं चोक्तं स्थावरे तु ध्रुवार्चनम्।।

**वि. १६, ७५**

मृण्मये तृणाच्छन्ने चैकबेरमेव स्थापयेत्।

**४.७.३९ बहुतलविमाने ध्रुवबेरस्योपादानद्रव्यम्**

**य.१२.५२ - ५५**

गौरवे तलभेदे तु लघुद्रव्योपरि न्यसेत्।।

आदौ तु शैलजं प्रोक्तं द्वितीये दारवं तु वा।

तृतीये शूलजं वाथ चतुर्थे लोहजं तु वा।।

अथवा मृण्मयं वाथ सर्वतः शूलमेव वा।
संस्थाप्य विधिना मन्त्री शर्करां लेपयेत् क्रमात्।।

विसृज्य पावकं पश्चाद्यजमानो गुरुं तथा।
सम्पूज्य दक्षिणां दत्त्वा वैष्णवांश्च सुपूजयेत्।।

**अ. ११.**

विमाने तले द्विभेदे(तलभेदे?) तु आदौ शैलजमुत्तमम्।।

अन्यत्र शैलजं नेष्टं दारुशूलानि कल्पयेत्।।

बहुबेराणि कर्तव्यान्यन्यत्रोपर्युपर्यपि।।

शिलां दारु च लोहं च मृल्लोहं च क्रमाच्चरेत्।
उपर्युपरि देशेषु तलेषु च व्शिषतः।।
कारयेद्विपरीतं चेत् विपरीतं भवेद् ध्रुवम्।
अथवा तलभेदेषु सर्वेषु च विशेषतः।।

श्रेष्ठं शूलमयं विद्यात् अथ दारुमयं तु वा।

## ४.७.४० आभिचारिकध्रुवबेरस्य उपादानादि

**ज्ञा.१०.१७**

बेरमिष्टकाकल्पितं पक्कं वा कण्टकवृक्षैर्नपुंसकवृक्षैर्वा कृतं कालाय-सपाषाणचूर्णहिङ्गुलशुनतैलशाणैर्वान्यैः फलपक्वद्रव्यैः संस्कृतमतिर-क्तमतिकृष्णमृद्युतमतिप्रमाणम् अतिदीर्घमतिस्थूलमतिकृशम्[1] ।

1 आभिचारिकमिति प्रकरणाल्लभ्यते।

## ४.७.४१ स्थानकनारसिंहादिबिम्बानाम् उपादानद्रव्यम्

**स.१३.५६, ५७**

स्थानकं नरसिंहं च शिलयैव प्रकल्पयेत्।।

त्रिविक्रमं च वाराहं कारयेत विधानवित्।

## ४.७.४२ ध्रुवबेरस्य उत्तमादिभेदः उपादानद्रव्यानुरोधेन

**स. १८.१, २**

उत्तमं शैलजं बेरं ताम्रजं चोत्तमोत्तमम्।।

मध्यमं मृण्मयं ज्ञेयमधमं दारवं तथा।

**नि.१३.**

[ अत्र ताम्रजं चोत्तमोत्तमम् इत्यस्य स्थाने लोहजमुत्तमोत्तमम् इति निर्दिश्यत इति विशेषः। ]

## ४.७.४३ ध्रुवबेरोपादानद्रव्यतारतम्यम्

**स. २४.५ - ६**

दारवाच्छैलजं श्रेष्ठं शैलजात् ताम्रजं वरम्।।

ताम्रजाद्राजतं श्रेष्ठं राजताद्रुक्मजं वरम्।

**य.११.१६, १७**

ध्रुवेषु दारवं श्रेष्ठं दारवान्मृण्मयं तथा।।

मृण्मयाच्छैलजं श्रेष्ठं शैलजात् ताम्रजं वरम्।

**वि १५. ६९, ७०**

### ४.७.४४ दारवादिध्रुवबेरस्य फलतारतम्यम्

**स. २४, ६ - ८**

दारवाच्छैलजार्चायाः फलं शतगुणं भवेत्।।

शैलजात् ताम्रजे बिम्बे सहस्रमधिकं फलम्।
ताम्रजाद्राजते बिम्बे त्वयुतं फलमुच्यते।।

राजताद्रुक्मजार्चायामनन्तं कथ्यते फलम्।

### ४.७.४५ दारुपार्थिवध्रुवबेरयोः प्रतिनिधिः

**खि . ८.११४**

शिलाजं ध्रुवबेरं स्यादलाभे दारुपार्थिवे।।

### ४.७.४६ ध्रुवबेरोपादानद्रव्यं सुवर्णं प्रशस्तम्

**स. २४.८, ९**

रुक्माभो रुक्मगर्भश्च देवो रुक्ममयो हरिः।।

सर्वस्य साधनं तस्मात् प्रियं चाप्यविनाशि तत्।
बहुना किं प्रलापेन रुक्मं विष्णुरिति स्मृतम्।।

**ज्ञा. ५६.९९**

किं बहुना सुवर्णेनोत्तममिति कश्यपः।

### ४.७.४७ ताम्रध्रुवबेरविषये मधूच्छिष्टविधानानुसरणम्

**प्र. ९.१४**

ताम्रेण ध्रुवबेरं चेत् मधूच्छिष्टविधानतः।।

**४.७.४८ ध्रुवबेरनिर्माणे अयआदिलोहनिषेधः**

**स.२४.१०**

अयसा त्रपुणा कांस्यरीतिकासीसकैर्बुधः।
न कुर्याद्दैवतारूपं कुर्याच्चेदाभिचारिकम्।।

**४.७.४९ कांस्यादिलोहेन निर्मातव्या देवताविशेषाः**

**ज्ञा. ५६. ९८,९९**

कांस्येन वसवः, साध्या वृत्तलोहेन, मरुतः पित्तलेन, दानवाः त्रपुणा, असुराः सीसेन, पिशाचा आरकूटेन रक्षांस्ययसा, भूताः सर्वलोहेन कार्याः। सुवर्णेनैव भगवन्तं, उपलेन शङ्करं,रजतेन विरिञ्चिं, ताम्रेणादित्यं कुर्यादिति ऋषयो वदन्ति।

**४.७.५० स्वर्णभिन्नान्योन्यमिश्रलोहनिषेधः**

**स.१९.६५**

स्वर्णमिश्रेण लोहेन यदि कुर्यात्तदुत्तमम्।
अन्योन्यमिश्रलोहेन देवरूपं न कारयेत्।।

**४.७.५१ शान्तिकध्रुवबेरस्य स्वरूपम्**

**ज्ञा . ४.६**

शैलं ध्रुवं [1]बेरं शङ्खगोक्षीरकुमुदाभम्।

**४.७.५२ पौष्टिकध्रुवबेरस्य स्वरूपम्**

**ज्ञा . १०.१६**

[2]बेरं श्यामलं पीतं वा।

---

1 शान्तिकमिति प्रकरणाल्लभ्यते। 2 पौष्टिकमिति प्रकरणाल्लभ्यते।

### ४.७.५३ शैलजध्रुवबेरफलम्

**स. १८.२; २५. २४**

मोक्षार्थी शैलजं कुर्यात्।

शैलजाऽऽयुष्यदा प्रोक्ता।

**अ. १२.**

[ अत्र मोक्षार्थी च शिलामयमित्येव निर्दिश्यत इति विशेषः। ]

**नि . १३.**

[ अत्र अर्चनाधिकारवत्। ]

### ४.७.५४ रत्नजध्रुवबेरफलम्

**प्र.७.२४- २६**

माणिक्यं श्रीकरं प्रोक्तं प्रवालं वश्यकारकम्।।

आकर्षणं तु वैडूर्यं स्फाटिकं पुत्रवृद्धिदम्।
विद्वेषणं मरकतं स्तम्भनं पुष्यरागकम्।।

नीलं तु रमणैकार्थं रत्नजानां फलं भवेत्।

**स. २५.२२**

[ अत्र रत्नजाः प्रतिमाः सर्वशान्तिकरा इत्येव उच्यत इति विशेषः। ]

### ४.७.५५ धातुजध्रुवबेरफलम्

**प्र. ७.२८, २९**

हैमं तु श्रीप्रदं प्रोक्तं रौप्यं राज्यप्रदायकम्।
ताम्रं पुत्रसमृद्ध्यर्थं कांस्यं विद्वेषकारकम्।।

प्रोच्चारणे चारकूटमायसं क्षयकारणम्।
सीसं नीरोगकरणं त्रपुरायुर्विनाशनम्।।

**स. १८.२, २५. २३**

[ अत्र राज्यकामी तु ताम्रजं, ताम्रजा च समृद्धिदा इति, सौवर्णी पौष्टिकी सर्वलोकसुखप्रदा, राजती कीर्तिदा इति चैव निर्दिश्यत इति विशेषः। ]

**ज्ञा.५६.९८**

[ कांस्यं प्रजाकरमित्यधिकतया निर्दिश्यत इति विशेषः। ]

**नि.१३**

[ अत्र लोहजं सर्वकामार्थी इत्येव निर्दिश्यत इति विशेषः। ]

### ४.७.५६ दारुजध्रुवबेरफलम्

**स. १८.३, २५. २४**

------------- पुत्रकामी तु दारवम्।

---------------- दारवी पुत्रवर्धनी।

**नि.१३**

**अ.१२**

[ अत्र धनार्थी दारुजं कुर्यादिति निर्दिश्यत इति विशेषः। ]

### ४.७.५७ मृण्मयध्रुवबेरफलम्

**स. १८.३**

धनार्थी मृण्मयं कुर्यात्-----------।
सर्वप्रजासमृद्ध्यर्थं मृण्मयं चेति केचन।।

**नि.१३.**

**४.७.५८ पक्वमृण्मयध्रुवबेरफलम्**

**प्र. ७.३३**

पक्वं नाशकरं चैवम् --------------।

**४.७.५९ अपक्वमृण्मयध्रुवबेरफलम्**

**प्र. ७.३३**

-------------- अपक्वं सर्वसिद्धिदम्।।

**४.७.६० ध्रुवबेरस्य शुभत्वम्**

**स. २४.६२**

विमानस्यानुरूपं हि ध्रुवबेरं शुभं भवेत्।

**४.७.६१ महारूपध्रुवबेरस्य प्राधान्येन उपादानद्रव्यम्**

**ज्ञा. ४०, ७२**

महारूपं मृदा चोपलैरेव[1] कारयेत्।

**४.७.६२ शैलजमहारूपध्रुवबेरफलम्**

**ज्ञा. ४०.७२**

महामूर्तिम् आयुःश्रीकीर्तिमिच्छन् शिलया----- कल्पयेत्।

**४.७.६३ धातुजमहारूपध्रुवबेरफलम्**

**ज्ञा . ४०.७२**

महामूर्तिं ----- प्रजापुण्यवृद्धिमिच्छन् ताम्रेण ----- कल्पयेत्।

1. अवधारणमिदं फलविशेषविवक्षयेति भाति।

### ४.७.६४ दारुजमहारूपध्रुवबेरफलम्

**ज्ञा. ४०. ७२**

योगैश्वर्यसुखार्थी दारुणा----- कल्पयेत्।

### ४.७.६५ मृण्मयमहारूपध्रुवबेरफलम्

**ज्ञा. ४०. ७२**

सुवर्णभूम्यादीच्छन् मृण्मयेन कल्पयेत्।

# ८. मत्स्यादिध्रुवबेरकल्पनम्

## ४.८.१ भगवदवताराणां प्रयोजनम्

**प्र.१६. ११२**

अवताराश्च कीर्त्यन्ते भूयांसः परमात्मनः।
धर्मसंरक्षणार्थाय दुष्टसंशिक्षणाय च।।

## ४.८.२ दशावताराः

**वि. ५५. ३६३**

मत्स्य-कूर्म-वाराह-नारसिंह-वामन-जामदग्न्य-राघव-बलभद्र-कृष्ण-कल्किन इति।

**प्र. १३. ४, ५ ; स. ५८. २ ; ज्ञा. ७९. १५१ ; अ. ३७**
**खि. १९. १, २ ; क्रि. ११. १**

**वा. १८**

[ अत्र 'अथवा बुद्धयुक्तं वा कृष्णेन सह कारयेत्' इति बुद्धः दशावतारेषु परिगण्यते। कृष्णस्तु स्वयं भगवान् इत्यभिप्रायेण अवतारमध्ये न परिगण्यते इति पक्षान्तरमुपदर्श्यत इति विशेषः।]

## ४.८.३ अवताराणां द्वैविध्यम्

**प्र. १६. ११३**

सद्य आविर्भवेद्विष्णुर्यत्र भक्तानुकम्पया।
आविर्भावं तु तं विद्यात् प्रादुर्भावमथेतरत्।।

## ४.८.४ आविर्भावप्रादुर्भावावताराः

**स.५८. ३**

पूर्वान् पञ्च वरान् प्राहुराविर्भावानिति क्रमात्।

अपरांस्तेषु पञ्चैव प्रादुर्भावान् वदन्ति च।।

**अ. ३७ ; खि. १९. ३ ; क्रि. ११.२ ; प्र. १६. ११३, ११४**

### ४.८.५ अवताराणामालयनिर्माणे वास्तुविशेषाः

**स. ५८. १० - १२**

ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।।

नदीतीरेऽथ वा कुर्यात् पर्वते वा वनेऽथ वा।
सेनामुखे च कुटिके तीरे वाऽब्धेस्तथैव च।।

एतेषां स्थापनं कुर्यात् प्रशस्ते रमणीयकम्।

### ४.८.६ अवतारालयस्य द्वैविध्यम्

**वा. २१.**

अवतारैर्विशेषेण स्वप्रधानं तदुत्तमम्।
कृत्वा परप्रधाने तु मध्यमं देशिकोत्तमः।।

### ४.८.७ मत्स्यादिध्रुवबेराणामुपादानद्रव्यम्

**वा. १८.**

दारुकेष्टशिला वाथ गृहीत्वा भाससार्धकम् (?)।
रूपं कृत्वा यथान्यायं मत्स्यादीनि यथाक्रमम्।

### ४.८.८ मत्स्यादिध्रुवबेराणां मानम्

**वि. ५५. ३६३**

एतेषां दशावताराणां प्रत्येकं पूर्वोक्तोद्देशमानेन ध्रुवबेरं निश्चित्य,
पश्चान्निर्देशमानं कुर्यात्।

### ४.८.९ मत्स्यध्रुवबेरालयनिर्माणे वास्तुविशेषः

**वा. १८.**

ग्रामाद्यादीनि सर्वत्र मध्यमे पश्चिमेऽपि वा।।

**प्र. १३. ९**

### ४.८.१० मत्स्यध्रुवबेरस्थापने विमानविशेषाः

**वा. १८.**

दीर्घशाला त्रिकूटं वा सर्वं यत्नेन कारयेत्।
हस्तिपृष्ठं विमानं वा कुम्भाकारमथापि वा।।

एवं विमानं सङ्कल्प्य ।

**प्र. १३ . ९, १०**

**स. ५८. १२, १३**

[ अत्र नन्द्यावर्तविमाने वा मण्डपे वाथ कारयेत् इत्यधिकतया निर्दिश्यत इति विशेषः। ]

**खि. १९. ५, ६**

मत्स्याकृतेस्तु देवस्य पृथक् स्थानं न विद्यते।।

नलीनके विमाने तु मध्यमे सम्प्रकल्प्यते।
तले पृष्ठे तु संस्थाप्य अर्चयेदिति शासनम् ।।

### ४.८.११ चित्राभासमत्स्यकूर्मध्रुवबेरयोः स्थापने विमानविशेषाः

**खि. १९. ७**

[1]अन्येषु तु विमानेषु प्रमुखे लेख्यमाचरेत्।
कूर्मं चापि तथा कुर्यात्सहितौ वा प्रपूजयेत्।।

---

1. नलीनकविमानभिन्नेषु

### ४.८.१२ मत्स्यध्रुवबेरस्य मानम्

**वि. ५५. ३६४**

पूर्वं मत्स्यस्य देहलब्धाऽङ्गुलेन भागाधिकं द्वितालं, नासाग्रात्पुच्छपर्यन्तं, नासाग्रान्नेत्रद्वयान्तं चतुरङ्गुलं, नेत्रात्कर्णं द्विमात्रं, तस्मात्पुच्छमूलं त्रिषडङ्गुलम्, तस्मात्पुच्छाग्रं चतुरङ्गुलं, कुक्षिपुच्छविस्तारं कर्मग्रहवेदाङ्गुलं, तत्तत्रिगुणपरिणाहं पुच्छमध्यविष्कम्भम्, एकाङ्गुलमग्रविस्तारं, षडङ्गुलं, मात्राद्यर्धमात्रं पक्षायामविस्तारं, तस्यायामं सप्तांशं कृत्वा द्व्यंशं त्र्यंशं वा पीठोत्तुङ्गं, सप्ताङ्गुलविस्तारं समवृत्तं पद्माकारम्। अत्रानुक्तं शिल्पशास्त्रोक्तवत् । एवं ध्रुवबेरं कारयेत्।

**प्र. १३. १०**

**वा. १८.**

द्वितालोन्नतमं (द्वितालेनोन्नतं ) कुर्यान्मानमेवमुदाहृतम्।।

नासाग्रपुच्छपर्यन्तमष्टाविंशतिमात्रकम्।
नासामात्रान्तरं मात्राचतुष्टं( ?) धाः ( ?) द्विमात्रकम्।।

तस्यां तु पुच्छमालानां नवगोलकमुच्यते।
तस्मात्पुच्छाग्रकं मात्राचतुष्कं हस्तकुन्दवत्।।

षण्मात्रशीर्षकं तारमुदरं नवमात्रकम्।
पुच्छमूलं चतुर्मात्रं पुच्छं तत्रैव योजयेत्।।

पुच्छार्धं तद् द्वितालं स्यात् कुर्यात्तद्वत् त्रिकौ बुधः।
एवं मत्स्यध्रुवं बेरं कारयित्वा परं क्रमात्।।

### ४.८.१३ द्विविधमत्स्यरूपस्वीकारे उद्देशः

**क्रि. ११. २, ४ - ७**

मत्स्यकूर्मौ द्विधा प्रोक्तौ-----------।

-----------------------------

----------- तेषां शृणुत लक्षणम् ।।

महाजलौघप्रलये चराचरजगत्क्षये।

तत्तोयमुपसंहर्तुमासीत् प्रथममत्स्यकः।।

तद्रोमकूपविवरे प्रमितः प्रलयार्णवः।

कल्पावसानप्रलयलीनवेदोपदेशकः।।

मत्स्य आसीत् द्वितीयश्च देवदेवो जनार्दनः।

**स. ५८. ५ - ७**

**ज्ञा. ७९. १५२**

[अत्र प्रलयजलोपसंहरणार्थम् एक एव मत्स्यावतार उच्यत इति विशेषः]

**प्र. १३. ५ - ८**

[ अत्र वेदोद्धरणार्थम् एक एव मत्स्यावतार उच्यत इति विशेषः ]

### ४.८.१४ मत्स्यकूर्मध्रुवबेरयोः प्रतिष्ठाया उद्देशः

**ज्ञा. ३७. ६९ , ७९. १५२**

वैराग्ययोगैश्वर्येप्सुः मत्स्यकूर्मौ --------- पूजयेत्। -----------

वैराग्यैश्वर्याभ्युदयप्रतिष्ठाकामः मत्स्यकूर्मौ ------------- अर्चयेत्।

### ४.८.१५ मत्स्यकूर्मयोः ध्रुवबेरयोः लक्षणम्

**स. ५८. १४**

ध्रुवबेरं तु मत्स्यं च कूर्मरूपं च कारयेत्।

विष्णुं पूर्ववदासीनं स्थितं वापि विधानतः।।

**खि. १९. ८**

पद्मासनस्थौ कर्तव्यौ भिन्नाञ्जनचयावुभौ।

रक्तं सुवर्णपार्श्वं च मत्स्यरूपं प्रकल्पयेत्।।

**प्र. १३. २०, २१**

मत्स्यकूर्मौ द्विधा प्रोक्तौ किञ्चिद् भेदं प्रचक्षते।।

द्विभुजौ केचिदिच्छन्ति केचिदिष्टभुजौ बुधाः।

### ४.८.१६ द्विविधमत्स्यध्रुवबेरयोः लक्षणम्

**क्रि. ११. ७, ८**

तप्तहाटकसङ्काशः प्रथमोऽन्योऽञ्जनप्रभः।।

रक्तपद्मासनारूढौ वितस्तिविसृतौ ? तथा।

विस्तारद्विगुणायामौ कुर्यान्मत्स्यौ यथाविधि।।

### ४.८.१७ द्विविधकूर्मध्रुवबेरयोः लक्षणम्

**क्रि. ११.१०**

अञ्जनाभं तयो रूपं चतुरश्रासनस्थितिः।।

### ४.८.१८ मत्स्यकूर्मध्रुवबेरयोः आलयनिर्माणे वास्तुविशेषाः

**ज्ञा. ३७. ६८**

अथ पर्वतोत्सङ्गे नदीतीरे विष्णुच्छन्दविमाने मत्स्यकूर्मौ सहैव पूर्ववत्।

### ४.८.१९ मत्स्यकूर्मध्रुवबेरयोः सहप्रतिष्ठायां विमानविशेषाः

**ज्ञा. ७९ १५२**

मत्स्यकूर्मौ सहैव कुम्भाकारे त्रिकूटे हस्तिपृष्ठे सोमच्छन्दे नन्द्यावर्ते वा विमाने प्रतिष्ठाप्यार्चयेदिति।

**४.८.२० मत्स्यकूर्मयोः परिवारबेराणि**

**ज्ञा. ७९. १५२**

तयोः पूजकौ ब्रह्मेशौ।

**४.८.२१ कूर्मरूपं द्विविधम्**

**ज्ञा. ७९ . १५२**

प्रथमो द्वितीयश्चेति द्विविधो भवति कूर्मः।

**४.८.२२ द्विविधकूर्मरूपस्वीकारे उद्देशः**

**ज्ञा. ७९. १५२**

स्वस्थानाच्चलितजगदण्डभरणार्थं प्रथमः। अमृतमथने मन्दराचलभरणार्थं द्वितीयः। तयोश्च तु रूपं पूर्ववत्।

**स. ५८. ७ - ९ , क्रि. ११. ९ , १० ; प्र. १३. १४**

**४.८.२३ कूर्मध्रुवबेरस्यालयनिर्माणे वास्तुविशेषाः**

**वा. १८.**

ग्रामादिवास्तुमध्ये तु पर्वताग्रे विशेषतः।
नदीतीरेऽब्धिवेलायामिन्द्राद्यास्वष्टदिक्षु च ।।

**प्र. १३. १५**

**४.८.२४ कूर्मध्रुवबेरस्थापने विमानविशेषाः**

**प्र. १३. १५**

नन्द्यावर्तविमाने वा फेलाकारविमानके।

**वा. १८.**

**४.८.२५ कूर्मध्रुवबेरस्य मानम्**

**वि. ५५. ३६५**

देहलब्धाङ्गुलेन एकाङ्गुलं शिरोमानं, द्विमात्रं कण्ठं (कर्णं) एकाङ्गुलं,

त्र्यङ्गुलं, हृदयान्तं, तत्समं नाभ्यन्तं, त्रिमात्रं पृष्ठान्तं, प्रकोष्ठं पाणितलं प्रत्येकमेकाङ्गुलं, तथैवोरुजङ्घापादतलं, तस्यायामसमं वैपुल्यं, पञ्चवर्णसमायुक्तं, अन्तः श्वेतनिभं, तस्यायामं षड्भागं कृत्वा, द्विभागं त्रिभागं वा पीठोत्तुङ्गं, वस्वङ्गुलविस्तारं पद्माकारं, शेषं युक्त्यैव कारयेत्।

**क्रि. ११. १० ; प्र. १३. १६**

**वा. १८.**

द्वाराभिमुखमासीनं कूर्मरूपं तु कारयेत्।
कृत्वा सर्वं च पूर्वोक्तं मानं रूपं च कल्पयेत्।।

उत्तमं चैकतालेन मानमेवं विधीयते।
शिरोमानं द्विमात्रं तु कर्णस्यैकाङ्गुलं भवेत्।।

हृदयं तु त्रिमात्रं स्यात् तत्तत्सञ्जातिमध्यमम्(?) ।
पृष्टं त्रिमात्रयुक्तं वै कोष्ठबाहुतलं तथा।।

एकैकमङ्गुलं प्रोक्तं पादमानं तथैव च।
तद्विस्तारसमायामं शेषरूपं विशेषतः।।

एवमेव ध्रुवं कृत्वा--------------।

---विधानमेवं तु पूर्ववत्स्थापयेद् गुरुः।।

**४.८.२६ वराहध्रुवबेरप्रतिष्ठायाः उद्देशः**

**ज्ञा. ३७. ६९**

राजराष्ट्रविवृद्धये वराहम्।

**४.८.२७ वराहध्रुवबेरस्थापने विमानविशेषाः**

**ज्ञा. ३७. ६८**

सर्वतोभद्रे अङ्गनाकारे सोमच्छन्दे वा अरण्ये वाराहम्।

**वा. १९.**

सर्वतोभद्रकं चैव चतुष्कूटविमानके।।

पर्वताकृतिके वापि विमानं चात्र कल्पयेत्।

**प्र. १३. २६**

[अत्र विमाने पर्वताकारे श्रीप्रतिष्ठितके तथा इति निर्दिश्यते। ]

## ४.८.२८ सपरिवारस्य वराहध्रुवबेरस्य लक्षणम्

**खि. १९. १० - १७**

दंष्ट्रायां दक्षिणायां तु धृत्वोर्वीं मोहनाकृतिम्।
स्थितं वराहवदनं चतुर्बाहुसमायुतम्।।

शङ्खचक्रधरं देवं भिन्नाञ्जनचयप्रभम्।
दंष्ट्रे स्फटिकसङ्काशे कुर्याच्छुभसमायते।।

मेदिनी श्यामला प्रोक्ता पद्मपत्रनिभाम्बरा।
न्यस्ताञ्जलिपुटा कार्या अङ्के वा कोलरूपिणः।।

उभाभ्यामपि बाहुभ्यां भर्ता कार्या धृता मही।
पुण्यधर्मौ मुनी तस्य पूजकौ परिकीर्तितौ।।

पुण्यः पद्मपलाशाभो धर्मः स्फटिकसन्निभः।
रक्तचाषाम्बरौ तौ तु पूजायां परिकल्पयेत्।।

पुण्यो दक्षिणभागस्थो धर्मः सव्यं समाश्रितः।
ब्रह्माणीं पिङ्गलाभां च द्वारवामेऽथ दक्षिणे।।

सुखासीने तथा कुर्यान्मुनिभिः परिवारिते।
स्वाहा स्वस्ति स्वधा मेधा कान्तिर्लज्जाऽऽहुतिः श्रुतिः।।

पुष्टिर्मतिर्धृतिः कीर्तिः श्रद्धा श्रीरिन्दुका सुधा।
एताश्च परितः कुर्यादालेख्यस्थास्सुराङ्गनाः।।

**वा. १९.**

उक्तमानं ध्रुवं बेरं वाराहं तत्र कल्पयेत्।।

मध्यमं दशतालेन मानोन्मानं तु कारयेत्।
अध्यर्धायतमुद्दिष्टमाना सा मुखमस्य वै।।

दंष्ट्रमेवं तु तत्रैव दक्षिणे समुदाहृतम्।
सकर्णौ शङ्खसंयुक्तौ वीरमङ्कुरपूरितम्( ? )।।

उक्तादन्यत्तु यत्सर्वं पूर्वोक्तेन विधानतः।
दक्षिणे चारुपौष्णीं च तामाहृत्याभिलालकम्।।

सम्प्रेक्षमाणे देवेशे देवी मुदमवाप्नुयात्।
महाविष्णोर्वराहस्य गरुडो भुजवाहनः।।

नित्यानपायिनं चैव निर्माल्याभरणोच्यते।
देवस्य वाहनान्यत्र चत्वारि परिकीर्तितम्।।

श्वेतवर्णं तु ऋग्वेदं यजुर्वेदं तु पीतकम्।
बालार्कस्य निभं साम रक्तवर्णं त्वथर्वणम्।।

द्विभुजो ऋग्यजुश्चैव मौलिपीताम्बरैर्युतम्।
चतुर्भुजं च  साम स्याद् ध्यात्वा तद्देशिकोत्तमः।।

द्विभुजं स्यादथर्वाणं दक्षिणाद्युत्तरान्तकम्।
यथाक्रमेण संस्थाप्य चतुर्वेदविधिं क्रमात्।।

निर्माल्याभरणयुक्तं पुलिन्दं चैव कारयेत्।
मकुटाभरणसंयुक्तं तप्तकाञ्चनसन्निभम्।
विधिना कारयेत्सम्यक् -------------

**ज्ञा. ३७. ६८**

ब्रह्मेशाभ्यामर्चितं सर्वतोभद्रे अङ्गनाकारे सोमच्छन्दे वा अरण्ये वाराहं मह्याश्लिष्टं शयानमासीनं स्थानकं वा वीशवासुकियुतं पुण्यधर्माभ्यां पूजितं पुष्टिकाकुमुद्वती व्याजने कुड्यद्वारोभयतः ब्रह्मश्रीः राजश्रीः चत्वारो वाहनं वेदाः शैषिकस्तु पुलिन्दाख्यो मुनिः। शेषं युक्त्या कारयेत्।

### ४.८.२९ वराहध्रुवबेरस्य त्रैविध्यम्

**प्र. १३. २४, २५**

वराहस्त्रिविधः प्रोक्तः देवस्याविष्कृतौ पुनः।।

क्रमादादिवराहश्च वराहः प्रलयात्मकः।
यज्ञवाराह इत्येवं त्रिविधः सम्प्रकीर्तितः।।

**स. ५८. २५, २६ ; ज्ञा. ७० . १५२ ; क्रि. ११. २**
**वि. ५६. ३६६**

### ४.८.३० आदिवराहावतारस्वीकारे उद्देशः

**स. ५८. २६ - २९**

देवमानुषतिर्यग्भिः स्थावरं जङ्गमानि च।।

पुरा सृष्टा यथा सर्वे चत्वारो भेदतः क्रमात्।
जरायुजाण्डजाश्चैवोद्भिज्जजाः स्वेदजादयः।।

एवं प्रवर्तमाने तु महिरत्यन्तपीडिता।
मग्ना रसातलं साक्षाद्धरिध्यानेन सङ्गता।।

रसातलगतां स्मृत्वा तत्समुद्धारणाय च।

महावराहरूपेण महीमुद्धृतवान् हरिः।।

**ज्ञा. ७०. १५२ - १५३ ; क्रि. ११. ११ , १२**

**प्र. १३. २१ - २४**

[ अत्र हिरण्याक्षेण हृताया रसातलनीताया भूमेः महावराहरूपेण हरिणोद्धारः कृत इति विशेषः। ]

**४.८.३१ यज्ञवराहावतारस्वीकारे उद्देशः**

**स. ५८. ४४ - ४६**

---------------- वक्ष्ये यज्ञवराहकम्।
हिरण्याक्षोऽथ दैत्येन्द्रो बलवान् बलिनां वरः।।

वरेण दर्पाद् दुर्बुद्धिर्यज्ञविद्वेषकोऽभवत्।
तद्वधं कृतवान् विष्णुर्नरसूकरमूर्तिमान्।।

हत्वा तु सबलं दैत्यं पश्चाद्यज्ञं व्यवर्धयत्।
तस्माद्यज्ञवराहस्तु तं च कुर्याद्विधानतः।।

**ज्ञा. ८०. १५३ ; क्रि. ११. २४ ; प्र. १३. ३३- ३६**

**४.८.३२ प्रलयवराहावतारस्वीकारे उद्देशः**

**ज्ञा. ८०. १५३**

अथ अवान्तरे महाजलैः जगत्प्रलये प्राप्ते तज्जलमुपसंहर्तुं महावराहः अभवत्। स प्रलयवराहः। तज्जलं रोमकूपेषूपसंहृत्य जगत् पुनः स्रष्टुं नरवराहः आसीत्।

**स. ५८. ३७, ३८ ; क्रि. ११. १९, २० ; प्र. १३. २९. ३०**

**४.८.३३ आदिवराहध्रुवबेरप्रतिष्ठाया उद्देशः**

**ज्ञा.८०. १५३**

राजराष्ट्रविवृद्धिकामो बहुभूमिधनसस्यादिप्राप्तिकामो वा प्रतिष्ठापयेत्।

### ४.८.३४ यज्ञवराहध्रुवबेरप्रतिष्ठाया उद्देशः

**ज्ञा. ८०. १५४**

देवं यज्ञवराहं यज्ञादिब्रह्मवर्चसकामः पूर्वोक्तविमाने[1] प्रतिष्ठापयेत्

### ४.८.३५ प्रलयवराहध्रुवबेरप्रतिष्ठाया उद्देशः

**ज्ञा. ८०. १५३**

प्रलयवराहमपमृत्युजयकामः स्वकुलवर्धनकामो वा [2]पूर्वोक्तविमाने प्रतिष्ठापयेत्।

### ४.८.३६ आदिवराहध्रुवबेरालयनिर्माणे विमानविशेषाः

**ज्ञा. ८०. १५३**

आदिवराहं सर्वतोभद्रे अङ्गनाकारे सोमच्छन्दे कुम्भाकारे त्रिकूटे हस्तिपृष्ठे वा विमाने----।

### ४.८.३७ आदिवराहध्रुवबिम्बलक्षणम्

**स. ५८. ३० - ३६**

दशतालेन मानेन देवं तत् क्रोडरूपिणम्।
मुखं वराहरूपं तु किरीटमकुटान्वितम्।।

सर्वाभरणसंयुक्तं चतुर्भुजसमायुतम्।
शङ्खचक्रधरं देवं नीलाम्बुदघनच्छविम्।।

वामं पादं समाकुञ्च्य महीमुद्वाह्य वेगतः।
दक्षिणं च स्थितं कुर्यान्महीमूरौ समाचरेत्।।

हरेर्दक्षिणहस्ते तु देवीपादौ धृतौ यथा।
तस्याः कण्ठबहिःपार्श्वे सव्यमाधारवच्चरेत्।।

मुखेन मूर्ध्नि जिघ्रन्तं वराहं तत्र कारयेत्।

1.& 2 आदिवराहप्रतिष्ठोक्तविमाने

महीं च श्यामवर्णाभां पञ्चतालविधानतः।।

पुष्पाम्बरसमायुक्तां सर्वाभरणभूषिताम्।
प्राञ्जलीकृतहस्ताभ्यां कुर्वन्तीं वन्दनं हरेः।।

सम्प्रसारितपादां च महीं तत्र समाचरेत्।

एवमादिवराहं तु कारयेल्लक्षणान्वितम्।।

**ज्ञा. ८०. १५३ ; क्रि. ११. १२ - १७ ; प्र. १३. २७ - २९**

**वि. ५६ . ३६६ , ३६७**

[ अत्र नागेन्द्रफणामणिस्थापितदक्षिणपादम् इत्यधिकम्। ]

### ४.८.३८ आदिवराहध्रुवबेरस्य परिवाराः

**ज्ञा. ७०. १५३**

तत् पूजकौ श्यामाभौ पुण्यधर्मौ प्रथमद्वारपालौ, श्वेताभां ब्रह्मश्रियं रक्ताभां राजश्रियं च, वाहनं श्वेताभं चतुर्वेदं शैषिकं, श्यामाभं पुलिन्दं च कारयेत्।

**क्रि. ११. १७ - १९**

### ४.८.३९ सपरिवारस्य यज्ञवराहध्रुवबेरस्य लक्षणम्

**स. ५८. ४७ - ४९**

श्वेतं यज्ञवराहं तु दशतालेन मानतः।
श्रीभूमीसहितं कुर्यात् तद्वर्णैस्तद्विभूषणैः।।

सुखासने समासीनं यज्ञवाराहमव्ययम्।
यज्ञतीर्थाविति ख्यातौ ऋषी तत्र च पूजकौ।।

यज्ञमग्निनिभं कुर्यात्तीर्थं श्वेतनिभं तथा।

**ज्ञा. ८०. १५३, १५४ ; प्र. १३. ३५. ३६**

**क्रि. ११. २५, २६**

[अत्र 'उक्तौ कनकयज्ञाख्यौ पूजकौ रुक्मसन्निभौ' इत्युच्यत इति विशेषः। ]

**वि. ५६. ३६७ - ३६८**

अथ यज्ञवराहं श्वेताभं चतुर्भुजं शङ्खचक्रधरं वामपादं समाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनं पीताम्बरधरं सर्वाभरणभूषितं कारयेत्। तस्य दक्षिणे देवीं श्रियं हेमाभां वामपादं समाकुञ्च्य दक्षिणं प्रसार्य आसीनां पद्मधरवामहस्ताम् आसने निहितदक्षिणहस्तां, वामपार्श्वे महीं देवीं सस्यश्यामनिभां दक्षिणपादमाकुञ्च्य वामं प्रसार्याऽऽसीनाम् उत्पल-धरदक्षिणहस्ताम् आसने निहितवामहस्तां देवं किञ्चित् समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत्।

### ४.८.४० सपरिवारप्रलयवराहध्रुवबेरस्य लक्षणम्

**स. ५८. ३८ - ४४**

कारयेत् पीतवर्णं तु तोयं येनोपसंहृतम्।।

शङ्खचक्रधरं सम्यक् चतुर्भुजधरं हरिम्।
दक्षिणं चाभयं हस्तं वामं कट्यवलम्बितम्।।

महीं च दक्षिणे कुर्यात् पद्महस्ते च दक्षिणे।
वामकट्यवलम्बं च सस्यश्यामनिभं तथा।।

नीलाम्बरधरं देवं पुष्पाम्बरधरां महीम्।
सुखासनक्रमेणैवमासीनौ तौ च कारयेत् ।।

वामभागे स्थितं कुर्यान्नारदं नवतालतः।
नारदं रक्तवर्णाभं वीणाहस्तं तु कारयेत्।।

मार्कण्डेयं भृगुं चैव पूजकौ तौ समाहरेत्।

पुण्यं पीतनिभं कुर्याद् भृगुमग्निनिभं चरेत्।।

एवं प्रलयवाराहः ------------------।

**ज्ञा. ८०. १५३ ; क्रि. ११. २०.२३ ; प्र. १३. ३० - ३२**

**वि. ५६. ३६७**

वामपादं समाकुञ्च्य, दक्षिणं प्रसार्य, सिंहासने समासीनं नीलाभं चतुर्भुजं शङ्खचक्रधरमभयदक्षिणहस्तम् ऊरुप्रतिष्ठितवामहस्तं पीताम्बरधरं सर्वाभरणभूषितं कारयित्वा, तस्य दक्षिणे देवीं महीं पादं वाममाकुञ्च्य, दक्षिणं प्रसार्य आसीनां श्यामाभां सर्वाभरणभूषिताम् उत्पलधरवामकराम् आसने निहितदक्षिणकरां किञ्चिद्देवं समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत्।

## ४.८.४१ आदिवराहादित्रिविधध्रुवबेराणां मानम्

**वि. ५६. ३६६**

[1]एतेषां मुखं वराहस्येव। मूर्धादिपादपर्यन्तं मध्यमदशतालेन नयेत्। मूर्ध्नः केशान्तं चतुर्मात्रं, तस्माद्दृगन्तं भागं, घोणान्तं रुद्रमात्रं, कलायुतं कण्ठं, कण्ठाद्धृदयान्तं, हृदयात् नाभ्यन्तं, नाभेः मेढ्रमूलान्तं त्रयोदशाङ्गुलम्, ऊरु त्रयोदशद्वयं, जानु वेदाङ्गुलं, जङ्घोरुसमा, तलं भागं, तदायामं सप्तदशाङ्गुलं, नेत्रं त्र्यङ्गुलं, भ्रूनेत्रतत्सृक्कं भूताङ्गुलं, सृक्काद्वेदाङ्गुलं हनु, नेत्रान्तरं त्रिमात्रं, नेत्रायामं द्व्यङ्गुलं, नेत्राच्छ्रोत्रं सप्ताङ्गुलं, कर्णतारं द्वियवं त्र्यङ्गुलं द्विगुणं तदायामम् एकाङ्गुलविस्तारं मुखम्, एकाङ्गुलं नेत्रव्यासं, नासामूलविस्तारं सप्ताङ्गुलं तन्मध्ये शराङ्गुलं नासाग्रं तालं, भागार्धमात्रं श्रोत्रं, तथैकाङ्गुलं पुरव्यासम्, अधरं त्रिकलाङ्गुलं, निर्गमं मूलतारं भागं तदर्धं तस्याग्रविस्तारं, दंष्ट्रायामं द्विमात्रं कण्ठतारं नवाङ्गुलं तथैव बाहुमूलविस्तारं(?) मध्यमदशतालोक्तमार्गेण कारयेत्।

---

1. आदिवराह - यज्ञवराह - प्रलयवराहाणाम्

**प्र. १३. २६**

दशतालेन मानेन देवं सूकरमाचरेत्।।

### ४.८.४२ नरसिंहध्रुवबेरस्थापने उद्देशः

**ज्ञा. ३७. ६९**

शत्रुदस्युविनाशायापराजितत्वकाङ्क्षी नृसिंहं ----------- पूजयेत्।

### ४.८.४३ नरसिंहध्रुवबेरस्य द्वैविध्यम्

**स. ५९ . १**

नारसिंहो द्विधा प्रोक्तो गिरिजः स्थूणजस्तथा।

**ज्ञा. ८१. १५४**

**वि. ५७. ३६९**

[ अत्र यानकनरसिंहोऽधिको निर्दिश्यत इति विशेषः। ]

### ४.८.४४ नरसिंहध्रुवबेरस्य पाञ्चविध्यम्

**क्रि. ११. २७ - २९ , ५८**

गिरिजः स्थूणजश्चैव सुदर्शननृसिंहकः।।
तथा लक्ष्मीनृसिंहश्च पातालनरसिंहकः।

इति पञ्चविधः प्रोक्तो नारसिंहो मनीषिभिः।।
गिरिजस्थूणजौ प्रोक्तौ खिले विस्तरशो मया।।
--------------------------------
नारसिंहविकल्पाश्च बहुधा परिकीर्तिताः।

### ४.८.४५ नरसिंहध्रुवबेरस्य षड्विधत्वम्

**प्र. १३. ५१, ५२**

गिरिजं स्थूणजं चैव सुदर्शननृसिंहकम्।

तथा लक्ष्मीनृसिंहं च पातालनरसिंहकम्।
तथा पुच्छनृसिंहं च नृसिंहं षड्विधं विदुः।।

### ४.८.४६ नृसिंहध्रुवबेरालयनिर्माणे वास्तुविशेषाः

**क्रि. ११. ४६, ४८**

सुदर्शननृसिंहं च स्थूणजं च विनेतरान्।
सर्वत्र कल्पयेत् पुष्ट्यै ग्रामादिषु च वास्तुषु।।

ग्राममध्ये यदि भवेत् तद्दृष्ट्या सर्वनाशनम्।
तस्मात् सर्वप्रयत्नेन चतुर्द्वाराणि कारयेत्।।

सुदर्शननृसिंहं च स्थूणजं च यथाविधि।
स्थापयेद् ग्रामबाह्येषु ग्रामाभिमुखमेव वा।।

(पर्वताग्रे नदीतीरे वने वा वृक्षसङ्कुले।
आरामेषु सरित्तीरे जर्झरे स्थापयेद् बुधः।।
सुदर्शननृसिंहस्य अत्रिणोक्तं समाचरेत्।)

### ४.८.४७ नरसिंहध्रुवबेरस्थापने विमानविशेषाः

**ज्ञा. ३७. ६९**

पर्वताकारे नन्द्यावर्ते सर्वतोभद्रे पौष्टिकोर्जालपत्रस्वस्तिकान्यतमे---।

**वा. २०.**

त्रिकूटे मण्डपे वापि हर्म्यके पर्वताकृतौ।।

### ४.८.४८ सपरिवारस्य नरसिंहध्रुवबेरस्य लक्षणम्

**ज्ञा. ३७. ६८, ६९**

नृसिंहं स्फटिकोपलमध्ये वा उत्कुटिकासने स्वस्तिकासने वा आसीनं

जानुप्रसारितोत्तम्भद्विबाहुं शङ्खचक्रधरं वामदक्षिणोत्तम्भजानुस्थैकहस्तं प्रसारितावलम्बितोरुस्थैकहस्तं शङ्खचक्रधरं वा सिंहासने चतुर्भुजं ब्रह्मेशाभिष्टुतं वा देवीभ्याम् ऋषिभ्यां यज्ञतीर्थाभ्यां ब्रह्मेशाभ्यां सामभूतीशाभ्यां वाहनशैषिकाभ्यामासीनम्।

**खि. १९. २० -३१**

सटालसिंहवक्त्रं च चतुर्बाहुं तलायुधम्।
वीरासने सुखासीनं व्यात्तास्यं धवलप्रभम्।।

अङ्गरागसमायुक्तं शङ्खचक्रधरं परम्।
शङ्खचक्रवियुक्तं वा द्विबाहुं नृहरिं चरेत्।।

बाहवस्सायुधाश्चाष्टौ यथायोगं प्रकीर्तिताः।
निरायुधं नरहरिं कुर्युस्सर्वेऽभयप्रदम्।।

राजा निरायुधं बिम्बं नैव कुर्यात्कदाचन।
अनन्तोत्सङ्गशयनं सप्तभिः फणमण्डलैः।।

समाच्छन्नशिरोदेशं वीशबाह्वोः स्थितं तु वा।
अष्टबाहुं चतुर्बाहुं तथा षोडशबाहुकम्।।

असङ्ख्याकभुजं चापि सायुधं कपिलाक्षकम्।
मुक्ताकुन्देन्दुधवलं रक्तवस्त्रविभूषितम्।
सर्वशत्रुहरं चैव धाम्नि चोर्ध्वतले स्थितम्।।

स्थापयेदर्चयेद्देवं नरकेसरिणं हरिम्।
तस्य दक्षिणपार्श्वे तु स्थापयेच्च पितामहम्।
वामपार्श्वे हितं रुद्रं स्थापयेद्वृषभध्वजम्।।

किष्किन्धसुन्दरौ चैव चामरग्राहिणौ मतौ।
किष्किन्धोऽञ्जनवर्णाभः सुन्दरः पद्मवर्णभाक्।।

किष्किन्धो दक्षिणं पार्श्वं सुन्दरो वाममाश्रितः।
यज्ञतीर्थौ सुखासीनौ पूजकौ परिकीर्तितौ।।

यज्ञः कनकवर्णाभः श्यामलस्तीर्थ उच्यते।
द्वारपार्श्वे च संयोज्यौ स्थितावेतौ द्विजोत्तमौ।।

मणिकं पुष्कलं चैव द्वारपार्श्वे समर्चयेत्।
भूतीशः शैषिकस्तौ द्वौ शैषिकस्थानमाश्रितौ।।

## ४.८.४९ नारसिंहस्य एकबेरस्य कल्पनम्

**स. १३. ५७ - ५९**

केवलं नरसिंहं तु वर्णहीनं शिलामयम्।।

देवीभ्यां रहितं कुर्यात् तितीर्षुर्भवसागरम्।
शत्रूणां विजयायैव पश्चान्मुक्तिप्रदायकम्।।

शिलामयं ध्रुवं बेरं वर्णवत्सुप्रतिष्ठितम्।
कर्तुः स्थानस्य देशस्य सर्वसम्पत्करं मतम्।।

## ४.८.५० नारसिंहध्रुवार्चनकल्पनम्

**क्रि. १२. ३९**

देवीभ्यां सहितं कुर्यात् नारसिंहं ध्रुवार्चनम्।
इच्छन्ति योगमार्गेण सन्तः सर्वे ध्रुवार्चनम्।।

## ४.८.५१ नरसिंहध्रुवबेरमानम्

**वि. ५७ . ३६९ , ३७०**

[1]तयोर्मुखं सिंहस्येव, अन्यन्नराकारम्। तस्य मूर्धादिपादपर्यन्तं सविंशतिशताङ्गुलं, शिरोमात्रात्रयम्। ततो नेत्रसूत्रान्तं षण्मात्रं, तस्माद्घोणं चतुर्मात्रं, तस्मादास्यं द्विमात्रम्, अधरं व्यङ्गुलं, नेत्राद् भ्रूः, मात्राऽऽयता, शेषं ललाटान्तं तारं, नवाङ्गुलं दृगन्तरम्, अध्यर्धनवाङ्गुलद्वि(त्रि)मात्रं नेत्रायामं तस्यार्धविस्तारं कनीनिकायामविस्तारं यवं पञ्चद्वयविस्तारायामं सितमण्डलं, मध्ये ज्योतिर्यवं दृष्टिरष्टांशं तारं पार्श्वयोरुपरिष्टाच्छ्वेतं शेषं यवत्रयमूर्ध्ववर्म तथा यवतारम् अधोगतं यवद्वयं ततो भागायते तत्पुच्छानने भ्रुवौ द्वादशाङ्गुलतारं नेत्रात्सूत्रसमं मुखम् आस्यतारं दशाङ्गुलं विवरं चतुरङ्गुलविस्तारं शेषं वर्तुलम् उन्नताश्चत्वारः पुरतो दन्ता अर्धमात्रविस्तृतायता, जिह्वा षडङ्गुलायामा व्यङ्गुलविस्तृता भागसृक्कात् कपोलान्तं घोणं चतुष्कलं कर्णमूलं तदधस्तात् कपोलं षडङ्गुलम् अपाङ्गात्कर्णमूलान्तं पञ्चाङ्गुलं कलाकर्णमूलं कर्णं त्रिमात्रार्धायामं चतुर्यवं कलातारं सूकरकर्णवत् रौद्रवक्त्रं सटायुतं तीक्ष्णेक्षणम् अन्याङ्गायामविस्तारं वराहस्योक्तमार्गेण कारयेत्।

**वा. २०**

नृसिंहध्रुवबेरस्य ध्रुवबेरोक्तवच्चरेत्।
मध्यमं दशतालेन मानोन्मानादिकं भवेत्।।

शिरोमानं त्रिमात्रं च नेत्रान्तं रसमात्रकम्।
अनुक्तं चैव यत्सर्वं शिल्पशास्त्रोक्तवच्चरेत्।।

---

1 द्विविधनारसिंहयोः ।

**४.८.५२ गिरिजनरसिंहावतारस्वीकारे उद्देशः**

**स. ५९ . १ - ८**

वरेण गर्वितो दैत्यो हिरण्यकशिपुस्तथा।।

देवैर्वा मानुषैर्वापि मृगैर्जीवैरजीवकैः।
दिवा रात्रौ च कुत्रापि वधो नैव ममेति च।।

एवं वरेण गर्वन्तं दैत्यं देवविरोधिनम्।
वधं कर्तुं कृतोद्योगश्चिन्तयित्वा हरिः प्रभुः।।

तच्छोणितपुराद् बाह्ये पर्वते शृङ्गकोपरि।
तद्बाधापीडितैर्देवैर्न्यवेदि च हरिः स्वयम्।।

नारसिंहवपुः कृत्वा दिवारात्रं व्यपोह्य च।
सन्ध्यायां च वधं कुर्याद् भुवङ्गे च नखाङ्कुरैः।।

बाह्यमाभ्यन्तरं हित्वा जीवाजीवैर्नखैश्शुभैः।
एवं दैत्यवधं कृत्वा पर्वते पुनरास्थितः।।

ब्रह्मेशाद्यैर्यथा देवैः स्तुतिभिः शान्तिमागतः।
हरिर्देवैः स्तवैस्तत्र तदेवं रूपमर्च्यताम्।।

इति देवैर्वृतो देवो वरमेतं तु दत्तवान्।
ततस्तमर्चयेद् भक्त्या विजयश्रीविवृद्धये।।

**ज्ञा. ८१. १५४, १५५ ; प्र. १३. ४४ - ४९**

**४.८.५३ गिरिजनरसिंहस्थापने विमानविशेषाः**

**ज्ञा. ८१. १५५**

पर्वताकृतिके श्रीप्रतिष्ठितके नन्द्यावर्तके सर्वतोभद्रके स्वस्तिके वा विमाने

तदुपरितले प्रतिष्ठाप्यार्चयेत्।

**स. ५९ . ९ ; प्र. १३. ५०**

## ४.८.५४ सपरिवारगिरिजनरसिंहबेरस्य लक्षणम्

**स. ५९. ९ - २१**

नारसिंहं प्रकुर्वीत दशतालेन मानतः।।

सिंहासने सुखासीनं श्रीभूमिसहितं हरिम्।
श्वेतवर्णं हरिं कुर्याच्छ्रियं कनकसन्निभाम्।।

मेदिनीं श्यामवर्णां च सर्वाभरणभूषिताम्।
नारसिंहं चतुर्बाहुं शङ्खचक्रधरं परम्।।

सव्यं दानकरं कुर्याद्वाममूरुप्रतिष्ठितम्।
अथवा वामपादं तु प्रसार्यैवासनादधः।।

दक्षिणं पादमाकुञ्च्य न्यस्य सिंहासनोर्ध्वतः।
हस्तं च दक्षिणं जानौ दक्षिणे सम्प्रसार्य च।।

सन्न्यस्य वामं वामोरौ सन्न्यस्यासीनमेव वा।
पादौ द्वौ च समाकुञ्च्य न्यस्य सिंहासनोर्ध्वतः।।

प्रसार्य हस्तौ द्वौ जान्वोस्तयोरूर्ध्वे निधाय च।
वस्त्रेण चोरुमाबध्य चासीनं वाथ कारयेत्।।

भृगुपुण्यौ च पूजार्थं पूजकस्थानमाश्रितौ।
भृगुश्च रक्तवर्णाभः श्वेताभः पुण्य उच्यते।।

ब्रह्मेशावपि वन्दन्तौ दक्षिणोत्तरयोः क्रमात्।
चतुर्भुजसमायुक्तं नवतालक्रमेण वै।।

तत्तद्वर्णसमायुक्तं तत्तच्चिह्नयुतं तथा।

वाहनं सामवेदं च प्रमुखे सम्प्रकल्पयेत्।।

साम श्यामनिभं कुर्यात् सर्वाभरणभूषितम्।
भूतीशं नाम गन्धर्वं शैषकास्थानमाश्रितम्।।

कारयेद्रक्तवर्णाभं सर्वाभरणभूषितम्।
श्रीभूमिभ्यां युतं वापि विना वा कारयेद्वरम्।।

स्थितं वापि समासीनं नारसिंहं समर्चयेत्।
एवं गिरिज उद्दिष्टः --------------।।

**प्र.१३. ५३ - ५८**

**ज्ञा. ८१. १५५**

तद्देवस्य मुखं सिंहस्येव केसरसटामण्डलसहितं चतुर्दंष्ट्रं करालं विवृतास्यं सिंहस्येव कण्ठं च नरस्येवान्यद्रूपम्। भुजाः चत्वारो द्वौ शङ्खचक्रधरौ दक्षिणोऽन्यो दानकरो वामोऽपि तदूरौ न्यस्तश्च। एवं देवेशं शङ्खकुन्देन्दुधवलं किरीटमकुटाद्याभरणयुतं सिंहासने सुखासनेन वीरासनेन वा समासीनं देवीभ्यां सहितं रहितं वा कारयित्वा तत्पृष्ठपार्श्वे अनन्तस्य सप्तभिः पञ्चभिर्वा फणैः छादितमौलिं चतुर्भुजं द्वाभ्यां चक्रशङ्खधरम् अन्याभ्यां स्वकर्णौ स्पृशन्तम् अनिरुद्धम् अथवा विना तथैवानन्तफणैश्च छादितमौलिं नारसिंहदेवं कारयित्वा सिंहासनाधस्तात् दक्षिणतः तथा वन्दमानं नवतालमानेन ब्रह्माणं चतुर्भुजं द्वाभ्यामक्षमालाकुण्डिकाधरमन्याभ्यां प्राञ्जलीकृतम् अभयकट्यवलम्बनकृतं वा जटामकुटयुतं, वामे च तथा वन्दमानमीशं चतुर्भुजं द्वाभ्यामक्षमालापरशुधरमन्याभ्यां प्राञ्जलीकृतं वा अभय-कट्यवलम्बनकृतं जटामकुटयुतं पूजकौ यज्ञतीर्थौ च पूर्ववत्। एवं मार्कण्डेयभृगू वाहनं सामवेदं श्यामवर्णं शैषिकं रक्ताभं भूतीशं च तत् स्थाने कारयेत्।

**वि. ५७. ३७०, ३७१**

नृसिंहं देवं सिंहासने पादं दक्षिणं प्रसार्य, वाममाकुञ्च्य, समासीनं, चतुर्भुजं शङ्खचक्रधरं कुन्देन्दुधवलप्रभं रक्तवस्त्रधरं सर्वाभरणभूषितं करण्डिकामकुटयुतं, पूर्वं दक्षिणकरमभयं दानं वा वामं कट्यवलम्बितमूरुस्थं वा कारयेत्। तद्दक्षिणे देवीं श्रियं वामपादं समाकुञ्च्य, दक्षिणं प्रसार्य आसीनां पद्मधरवामहस्तां, आसने निहितदक्षिणहस्तां, सुवर्णाभां सर्वाभरणभूषितां, वामे पार्श्वे महीं देवीं दक्षिणं पादमाकुञ्च्य वामं प्रसार्याऽऽसीनामुत्पलधर-दक्षिणहस्ताम् आसने निहितवामहस्तां सस्यश्यामाभां सर्वाभरणभूषितां कारयेत्। अथवा नृसिंहमासनस्योर्ध्वे वामं पादं प्रसार्य अन्यमाकुञ्च्य, तज्जानूर्ध्वे दक्षिणहस्तं गजहस्तवत्प्रसार्य, वाममूरौ सन्न्यस्य, आसीनं शङ्खचक्रधरं देवीभ्यां सहितं रहितं वा कारयेत्। केवलं नृसिंहं देवं पद्मपीठोपरिष्टात् द्वौ पादौ व्यत्ययेन न्यस्य, उत्कुटिकासनेन आसयित्वा ऊरुमध्ये वस्त्रेणाबध्य, सर्वाभरणसंयुक्तं चतुर्भुजं शङ्खचक्रधरं अन्यहस्तौ जानूपरिष्टात्प्रसारितौ च कारयेत्।

### ४.८.५५ स्थूणजनरसिंहावतारस्वीकारे उद्देशः

**स. ५९. २१ - २४**

---------------- स्थूणजस्सम्प्रवक्ष्यते।।

ततः काले प्रयाते तु हिरण्याख्योऽसुरः पुरा।
निर्दैवत्यवरादेव हिरण्याख्यस्तु दानवः।।

देवानृषीन्मनुष्यांश्च सदा सर्वानपीडयत्।
तद्दैत्यस्य वधं कर्तुं क्रोधाविष्टो महाबलः।।

स्थूणान्तरप्रविष्टस्सन्नारसिंहवपुर्ह्यभूत्।

**ज्ञा. ८१. १५५**

**४.८.५६ स्थूणजनरसिंहध्रुवबेरस्थापने उद्देशः**

**ज्ञा. ८१. १५६**

स्थूणजं नारसिंहमाधिव्याधिभीतिविनाशार्थी जयकीर्त्यायुष्कामो वा प्रतिष्ठाप्यार्चयेत्।

**स. ५९. २४, २५**

**४.८.५७ स्थूणजनरसिंहध्रुवबेरस्थापने विमानविशेषाः**

**स. ५९. २५**

महापद्मविमाने वा स्वस्तिके भद्रकेऽथ वा ।।

**ज्ञा. ८१. १५६**

**४.८.५८ सपरिवारस्थूणजनरसिंहध्रुवबेरस्य लक्षणम्**

**स. ५९. २६ - ३४**

दशतालेन मानेन समासीनं च कारयेत्।
वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च।।

चतुर्भुजधरं देवं शङ्खचक्रधरं वरम्।
हस्तं तु दक्षिणं पूर्वं कुर्याद्दानकरं तथा।।

वामहस्तं प्रसार्यैव तदूरौ च सुसन्न्यसेत्।
सटास्कन्दनसंयुक्तं तीक्ष्णदंष्ट्रं भयानकम्।।

शङ्खकुन्देन्दुधवले सर्वाभरणभूषितम्।
सिंहासने समासीनमुपधानसमायुते।।

ब्रह्मेशौ कोपशान्त्यर्थं वन्दन्तौ तौ चतुर्भुजौ।
कुर्यान्नवार्धतालेन प्राञ्जलीकृत्य सुस्थितौ।।

कुण्डिकामक्षमालां च धरन्तं च पितामहम्।
मृगं च परशुं पाणौ धरन्तं शङ्करं तथा।।

दक्षिणोत्तरयोर्द्वौ च कारयेत विधानतः।
यज्ञतीर्थौ समाख्यातौ पूजकौ तु समाचरेत्।।

प्रह्लादं दक्षिणे कुर्यात् प्राञ्जलीकृत्य सुस्थितम्।
उत्तरे लोकपालांश्च भित्तौ देवप्रणामकान्।
नारसिंहमिदं रूपम्---------------।

**प्र. १३. ५८ - ६१**

**वि. ५७. ३७१**

[ अत्र कोपशान्त्यर्थं श्रीमह्यौ कारयेदिति निर्दिश्यत इति विशेषः। ]

**ज्ञा. ८१. १५५, १५६**

उपधानरहिते सिंहासने समासीनस्य अतितीक्ष्णनखयुतदीर्घपाणियुताः भुजाश्चत्वारः द्वौ चक्रशङ्खधरौ विना वापि तथोद्धृतो दक्षिणोऽन्यो दानकरः वामः प्रबद्धः तदूरौ न्यस्तः। मुखमन्यद्रूपं च पूर्ववत्। महाकोपयुतं देवं तन्मकुटोपरि छत्रं रक्तवर्णं भित्तिपार्श्वे पूर्ववच्चामरधरौ किष्किन्धसुन्दरौ च कारयित्वा सिंहासनादधस्तात् दक्षिणवामयोश्च 'प्रभो कोपमुपसंहरे' ति देवेशम् उद्वीक्ष्य वन्दमानौ ब्रह्मेश्वरौ च पूर्ववत् कारयित्वा दक्षिणे प्राञ्जलीकृतां श्रियं देवीं, वन्दमानं द्विहस्तं प्रह्लादं च वामे, पूर्ववत् तत्तत् स्थाने अन्यपरिवारांश्च कारयेत्। अथवा श्रीदेवीं प्रह्लादनारदलोकपालान् भित्तौ समुल्लिखेत्।

**वि. ५७. ३७१**

अथवा अष्टाभिर्द्विरष्टाभिर्वा भुजैर्युक्तं भयानकं दैत्यवधानुरूपं नृसिंहं स्थौणं कारयेत्।

**४.८.५९ सपरिवारसुदर्शननृसिंहध्रुवबेरस्य लक्षणम्**

**क्रि. ११. २९ - ३३**

सुदर्शननृसिंहस्य लक्षणं सम्प्रवक्ष्यते।।

कोटिसूर्यप्रतीकाशं चक्रं विमलमुज्वलम्।
बृहद्भानुपुरद्वन्द्वं चक्रमध्ये प्रकल्पयेत्।।

तस्य मध्ये सुखासीनं नृसिंहमरुणप्रभम्।
अत्यन्तभीषणाकारं भक्तानामभयप्रदम्।।

चक्रायुधं चतुर्बाहुं देवदेवं प्रकल्पयेत्।
तस्य सिंहासनाधस्तात् दक्षिणोत्तरपार्श्वयोः।।

वन्दन्तौ कोपशान्त्यर्थं ब्रह्मरुद्रौ प्रकल्पयेत्।

**प्र. १३. ६२ - ६४**

**४.८.६० सपरिवारलक्ष्मीनृसिंहध्रुवबेरस्य लक्षणम्**

**क्रि. ११. ३४ - ४२**

वक्ष्ये लक्ष्मीनृसिंहस्य लक्षणं मुनिसत्तमाः।।

सिंहासने सुखासीनं वामपादं प्रसार्य च।
आसने निहितं पादं दक्षिणं कुञ्चितं तथा।।

देवस्योरौ प्रकुर्वीत लक्ष्मीं सर्वाङ्गसुन्दरीम्।
सर्वाभरणसंयुक्तां व्रीडाहर्षसमन्विताम्।।

प्राञ्जलीकृतहस्तां तां पद्मकिञ्जल्कसन्निभाम्।
प्रसारितपदां देवीं पञ्चतालप्रमाणतः।।

वरदाभयहस्तां वा उद्यत्पद्मधरां तु वा।

15

दक्षिणेनैव हस्तेन कुर्वंस्तदुपगूहनम्।।

वाममूरौ निवेश्यैव पराभ्यां शङ्खचक्रभृत्।
भुक्तिमुक्तिफलापेक्षीं कुर्यादेवं यथाविधि।।

केवलामुष्मिकापेक्षी लक्ष्मीं वामे प्रकल्पयेत्।
वामभागे तु कुर्याच्चेत् वामोरौ तां निवेश्य च।।
(प्रसार्य दक्षिणं पादं वामपादं तु कुञ्चितम्।)

वामेन तां परिष्वज्य दक्षिणेनाभयप्रदम्।
पराभ्यां च कराभ्यां च शङ्खचक्रधरं तथा।।

एवं सम्परिकल्प्यैनं ब्रह्मेशावपि पूजयेत्।
**प्र. १३. ६५ - ६७**

## ४.८.६१ सपरिवारपातालनृसिंहध्रुवबेरस्य लक्षणम्

**क्रि. ११. ४९ - ५५**

पातालनरसिंहं च प्रवक्ष्यामि समासतः।
वामजानु समुद्धृत्य दक्षिणेनैव जानुना।।

आसीनं गरुडं कुर्यात् चतुर्भुजसमन्वितम्।
उभाभ्यामपि पाणिभ्यां हृदयेऽञ्जलिसंयुतम्।।

कराभ्यामितराभ्यां च दधानं शेषविग्रहम्।
भोगिभोगत्रिवलयं स्कन्धे कुर्याद् गरुत्मतः।।

उत्तमाङ्गं समुद्धृत्य फणामण्डलमण्डितम्।
कल्पयेत् तत्फणाधस्तात् नारसिंहं यथाविधि।।

कुञ्चितं वामपादं तं शेषभोगे निधाय च।

आसीनं दक्षिणं पादं वीशस्कन्धे प्रसार्य च।।

अष्टबाहुसमायुक्तमभयं दक्षिणं करम्।
शेषैश्चक्रं शरं खड्गं दधतं बाहुभिस्त्रिभिः।।

वामे शङ्खं च शार्ङ्गं च खेटकं च गदामपि ।
शेषं पूर्ववदुद्दिष्टं ------------------

**प्र. १३. ६७, ६८**

पातालनरसिंहाख्यमासीनं पूर्ववत्तथा।।

फणैस्तु पञ्चभिस्सम्यक् छन्नमूर्धानमेव च।
दक्षिणादक्षिणं हस्तं वरदं कटिकं तथा।।

## ४.८.६२ पुच्छनृसिंहध्रुवबेरस्य लक्षणम्

**प्र. १३. ६९, ७०**

वक्ष्ये पुच्छनृसिंहं तु पुच्छयुक्तं तु कारयेत्।
अभयं दक्षिणं हस्तं वाममूरुप्रतिष्ठितम्।।

दक्षिणं पादमाकुञ्च्य सर्वाभरणभूषितम्।

## ४.८.६३ यानकनरसिंहध्रुवबेरस्य लक्षणम्

**वि. ५७. ३७१**

अथ यानकं नारसिंहं वीशस्कन्धोपरिष्टात्, शेषोत्सङ्गे समासीनं तत्फणैः पञ्चभिः छन्नमौलिं चतुर्भुजं शङ्खचक्रधरं सर्वाभरणभूषितं कारयेत्।

## ४.८.६४ वामनत्रिविक्रमावतारस्वीकारे उद्देशः

**स. ५९. ४२ - ४७**

वैरोचनसुतोऽत्युग्रो बली च बलिनां वरः।

सर्वान् देवांश्च जित्वैव देवलोकमुपाव्रजत्।।

देवानिन्द्रादिकांश्चैव निर्वीर्यानकरोद् बलात्।
तद्बलस्यापहारार्थं जातोऽयं कश्यपस्य तु।।

हरिर्वामनरूपेण छत्री दण्डी च वेदवित्।
वर्तमाने महायज्ञे बलेर्वैरोचनस्य वै।।

तद्यागशालां सम्प्राप्य वटुरूपस्सुरेश्वरः।
कुं देहि त्रिपदं मह्यमित्युक्त्वा तमयाचत।।

बलिश्च तस्मै त्रिपदं प्रादात्तोयेन वै ततः।
हस्ते तोये पतत्याशु भद्ररूपमवाप्य सः।।

त्रिलोके त्रिपदन्यासात् सर्वलोकानुपाददे।
देवैस्त्रिविक्रमं रूपं सर्वलोकेषु सन्दधे।।

**प्र. १४. १ - ६**

**क्रि. ११. ६०, ६१**

वैरोचने बलवति बलिनोऽसुरपुङ्गवात्।
काश्यपात् वामनोऽदित्याम् अपहर्तुं जगच्छलात्।।
आसीत् तस्य प्रवक्ष्यामि प्रतिष्ठामर्चनादिकम्।
त्रिविक्रमः स एवासीत् त्रिलोकक्रमणोद्यतः।।

**ज्ञा. ८२ . १५७**

**४.८.६५ वामनत्रिविक्रमध्रुवबेरयोः प्रतिष्ठाया उद्देशः**

**ज्ञा. ३७. ६९**

राज्यलाभाय, विद्यार्थं वामनं त्रिविक्रमं च ।

**ज्ञा. ८२. १५८**

विद्यार्थी वामनं भूलोकविजयार्थी त्रिविक्रमं प्रथमम्, अन्तरिक्षजयार्थी द्वितीयं, स्वर्गलोकजयकामः सर्वलोकजयकामः तृतीयम्, अष्टभुजं, सार्वभौमत्वकामी, चतुर्भुजं राज्यार्थी, ब्रह्मवर्चसकामः द्विभुजमेवं त्रिविक्रमम्।

**४.८.६६ वामनत्रिविक्रमध्रुवबेरयोः स्थापने वास्तुविशेषाः**

**खि. १९. ७२ - ७४**

ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।
नदीतीराश्रये वापि वेलायां सागरस्य वा।।

शैलाग्रे शैलपार्श्वे वा वनपार्श्वे वनान्तरे।
स्थानं यत्रैव विस्तीर्णं तत्रापि च मनोरमे।।

कारयेत्तु विधानेन विमानं लक्षणान्वितम्।

**वा. २०.**

[ अत्र राजधान्यां अग्रहारे वा इति अधिकम्। ]

**४.८.६७ वामनत्रिविक्रमध्रुवबेरयोः विमानविशेषाः**

**खि. १९. ७४ - ७७**

नन्दीविशालमष्टाङ्गं सोमच्छन्दं चतुस्स्फुटम्।।

बृहद्वृत्तविमानं वा दीर्घशालमथापि वा।
विमानेष्वेषु चैकस्मिन् यजमानेच्छया गुरुः।।

शिल्पशास्त्रोक्तविधिना कारयित्वा गृहं हरेः।

-----------------------------------

कुर्याद्विमानं प्राग्द्वारं प्रत्यग्द्वारमथापि वा।

पूर्वद्वारं तु मोक्षार्थी तथान्यं भोगकामुकः।।

**स. ५९. ४९**

[ अत्र कूटे वा गोपुराकारे इत्यधिकम्। ]

**ज्ञा. ८२. १५८**

[ अत्र त्रिकूटे छत्राकारे इत्यधिकम्। ]

**प्र. १४. ६, ७**

[ अत्र वसन्तकविमाने भद्रके हस्तिभद्रके महाकूटे इति विशेषः। ]

**वा. २०.**

[ अत्र सोमच्छन्दम् इति अधिकम्। ]

**ज्ञा. ३७. ६९**

गारुडभौतिकसोमच्छन्दचतुः स्फुटाद्यतया वामनं त्रिविक्रमम्।

**४.८.६८ वामनं - त्रिविक्रमध्रुवबेरयोः सहस्थापनं पृथक्स्थापनं च।**

**ज्ञा. ८२ . १५७**

तौ सहैव स्थापयेत्। वामनं धुववेर पृथगेवेति केचित्।

**क्रि. ११. ८१**

**४.८.६९ गर्भगृहे वामनध्रुवबेरस्थापनस्थानम्**

**वा. २०.**

--------------- तिष्ठन्तं मानुषं पदम्।

स्थापयेत्तत्र लोकेशम्।

**४.८.७० पृथक्स्थापनपक्षे वामनध्रुवबेरलक्षणम्**

**खि. १९. ३२ - ३५**

इन्द्रानुजं त्वदितिजं काश्यपं ब्रह्मचारिणम्।

आषाढाजिनसंयुक्तं शिखासूत्रसमन्वितम्।।

पवित्रशाटीसंयुक्तं सच्छत्रं दाण्डसंयुतम्।
वर्णिनं वामनं कुर्याद् द्विभुजं सोमवर्चसम्।।

कनकः शङ्खिलस्तस्य पूजकौ परिकीर्तितौ।
कनकः कनकाभश्च शङ्खिलः शङ्खसन्निभः।।

कनको दक्षिणं पार्श्वं शङ्खिलो वाममाश्रितः।
द्वारपालौ तु संयोज्यौ स्थितावेतौ खगेश्वरौ।।

**ज्ञा. ८२. १५८**

पृथक् चेत् वामनं हस्तेन दक्षिणेन दण्डधरं वामेन छत्रधरं देवं कारयित्वा पूजकौ कनकशङ्किलावेव कारयेत्।

**प्र. १७. १९, २०**

अथ वा वटुरूपं तु धृत्वा दण्डकमण्डलू।।

स्वर्णच्छविं बालरूपं द्विभुजं कारयेद्धरिम्।

**वि. ५७. ३७२**

अथ वामनं पञ्चतालमितं द्विभुजं छत्रदण्डधरं कौपीनवाससं शिखापुस्तक-मेखलोपवीतकृष्णाजिनसमायुतं पवित्रपाणिं बालरूपं ब्रह्मवर्चस्विनं कारयेत्।

## ४.८.७१ दधिवामनध्रुवबेरस्य लक्षणम्

**प्र. १७.१८ , १९**

अथ वा कारयेत्कुम्भं दध्यन्नं च करद्वये।।

दधिवामनमाहुस्तं श्वेताभं द्विभुजं हरिम्।

## ४.८.७२ वामनध्रुवबेरमानम्

### वि. ५७. ३७२ - ३७४

मूर्ध्नः केशान्तं मात्रार्धं, केशान्तात् दृगन्तं यवद्वयाधिकत्रिमात्रं, तस्मात्पुटान्तं सयवत्र्यङ्गुलं, तत्समं हन्वन्तं, गलं द्वियवाधिकद्विमात्रं तस्माद् हृदयं द्वियवाधिकषण्मात्रं हृदयान्नाभ्यन्तं तत्समं नाभेर्मेढ्रमूलान्तं तत्समं तस्मादूरुस्सूर्यमात्रो जानुर्व्यङ्गुलं द्वादशाङ्गुलं जङ्घातलं, वलिं द्विमात्रां (त्रं) तलायामं द्वादशाङ्गुलं, मुखस्य तारं दशाङ्गुलं, यवोनकलाङ्गुलं नेत्रं, नेत्राद् भ्रूस्तावत् केशान्तं शिरोभागं द्वियववद्विस्तारं पुरोगतं दृशोस्तारं कारयेत्। षड्भिः षोडशभिर्यवोनं कोलकं नेत्रान्तरं श्रोत्रं दृशौ च द्वियवतारं पञ्चमात्रं श्रोत्रविस्तृतं कला तत्त्रिगुणायामं नासाग्रं मात्रार्धं विस्तृतानासाग्रविपुलं मात्राद्वयमर्धं तदर्धं मध्यमूलं त्रियवाङ्गुलमुन्नतनासाग्रं गोजीमूला-द्वियवोनद्व्यङ्गुलतारमधरं तदर्धतद्विगुणदीर्घं दीर्घाद्द्विगुणमास्यम् उत्तरोष्ठविशालं यवद्वयं पाली पञ्चषड्यवम् अधरोष्ठमधोहनुष्षड्यवा कला कण्ठाद्धनुपर्यन्तं निर्गममष्टाङ्गुलविशालं हिक्का तस्मात् द्विसप्ताङ्गुलं दीर्घं दोर्दशाङ्गुलं प्रकोष्ठं मणिबन्धात्तलं भागं तस्मान्मध्याङ्गुली समाधस्वतृतीययवाधिकं नखायामम् अङ्गुलमुन्नतं दीर्घप्रदेशन्यनामिके कलायते अङ्गुष्ठकनिष्ठायामविस्तृते नवाष्टसप्तषट्पञ्चयवं तारं क्रमादङ्गुष्ठादि कनिष्ठान्ताङ्गुलीनां कलाद्वयं तस्य विपुलं तस्य बहुलं हव्यवाहनाङ्गुलमग्रतारं त्रिभागात् द्विभागं नखविस्तृतं स्वितातृकं नखायामं त्रिमात्रार्धचतुर्मात्रं षडङ्गुलं षड्यवं भागं क्रमान्मणिबन्धं प्रकोष्ठं कोर्परं बाहुमूलम् अष्टादशाङ्गुलं वक्षस्थलस्य विपुलं मुखं मध्यं कलामुखं श्रोणीतारं षोडशाङ्गुलं मुखमङ्गुलोनमूरुमूलं जानुविशालं सप्ताङ्गुलं जङ्घातारं पञ्चार्धाङ्गुलं नलकाविशालं सार्धरुद्राक्षाङ्गुलम् अग्रविस्तारं पञ्चाङ्गुलं चतुर्यवं कलायताङ्गुलं तर्जनीसमायता दीर्घार्धविस्तृताङ्गुष्ठमङ्गुलीनां विपुलं

शेषं युक्त्यैव कारयेत्।

**वा. २०.**

विमाने दक्षिणे पार्श्वे कल्पयेद्वामनाकृतिम्।।

नवतालेन मानेन कारयित्वा सलक्षणम्।
ऊर्ध्वाधश्च समं कुर्यात् आयामं मुखमुच्यते।।

गोलकं गलमानं स्यात् आनाभेस्सम्मितं मुखम्।
मेढ्रान्मूलाङ्गुलं पञ्च ऊरुं तं मुखसम्मितम्।।

जानुप्रदेशे कर्तव्यं गोलकं चाङ्गुलार्धकम्।
मुखायामं तु जङ्घे तु तारान्तश्चरणं भवेत्।।

पादं त्र्यङ्गुलं तत्र अत्यर्थं गुल्फमङ्गुलम् ।

उष्णीषार्धाङ्गुलं विद्यात् पञ्चतालं तु वामनम्।।

द्वियङ्गुलाधिकं प्रोक्तं वामनं चित्रवामनम्।
मुखायामं तदर्धःस्यात् बाहू द्वौ मणिबन्धयोः ।।

तदूर्ध्वे मुखबन्धौ च सद्वियङ्गुलमुच्यते ।
दशाङ्गुलेन मानेन कारयेद्देशिकोत्तमः ।।
नाहं तदुक्तवत् कृत्वा स्मृत्वा सर्वाङ्गुलं भवेत्।

ब्राह्मवेषसमायुक्तं जटिनं ब्रह्मचारिणम्।।
कृष्णाजिनधरं शान्तं निरुक्तं सर्वभूषणम्।

सर्ववेदानधियंश्च हस्ते पुस्तकधारिणम्।।
दण्डिनं छत्रहस्तं च तिष्ठन्तं मानुषे पदे ।

## ४.८.७३ त्रिविक्रमस्य पादन्यासभेदेन त्रिविधं रूपम्

**वि. ५७. ३७४**

त्रिविक्रमस्त्रिधा प्रोक्तः लोकेषु त्रिपादन्यासात्। भूलोकाक्रमणार्थं जानुमात्रम् अन्तरिक्षलोकाक्रमणार्थं नाभिमात्रं, स्वर्गलोकक्रमणार्थं ललाटमात्रं च ऊर्ध्वपादो भवेत्।

**स. ५९. ४८ ; क्रि. ११. ६२**

**खि. १९. ३६ - ४०**

वामनो ववृधे श्रीमान् त्रिविक्रममितावनिः।
दक्षिणं सुस्थितं पादं वाममुत्तानकं चरेत्।।

तस्य विक्रममाणस्य चन्द्रादित्यौ स्तनान्तरे।
ततो विक्रममाणस्य सक्थिदेशे स्थितौ पुनः।।

ततो विक्रममाणस्य जानुगाविन्दुभास्करौ।
सा विभूतिर्जगद्धर्तुः पादोद्धरणसंस्थितौ।।

त्रिधा तु संस्थितिर्भिन्ना पादन्यासप्रभेदतः।
जान्वन्तोद्धृतपादेन नाभ्यन्तोद्धृतकेन च।।

ललाटान्तोद्धृतेनाथ तृतीयेयं विशिष्यते।
वामहस्तं समुद्धृत्य पादपार्श्वे तु सूचयेत्।।

**स. ५९ . ५६ - ५८**

जानुमात्रोद्धृते पादे प्रथमस्त्वभिधीयते।।

नाभिमात्रोद्धृते पादे द्वितीयं परिचक्षते।
पादे ललाटमात्रे तु तृतीयं तु त्रिविक्रमम्।।

उक्तेष्वेतेषु रूपेषु रूपमिष्टं प्रकल्पयेत्।

**क्रि. ११. ६९ ; प्र. १४. ३७ , ३८**

### ४.८.७४ त्रिविक्रमस्य द्विभुजादिभेदेन त्रिविधं रूपम्

**वा.२०**

द्विभुजं भूतिकामी स्याद्राज्यकामी चतुर्भुजम्।
भुजमष्टौ तु विजयी सर्वकामं सुखी लभेत्।।

### ४.८.७५ सपरिवारत्रिविधत्रिविक्रमध्रुवबेरस्य लक्षणम्

**स. ५९. ५० - ६७**

दशतालेन मानेन चाष्टहस्तसमन्वितम्।
चतुर्भुजं वा देवेशं श्यामलाङ्गं च कारयेत्।।

गदाचक्रासिशक्तीश्च शरं शङ्खं च शार्ङ्गकम्।
हस्तैर्धारयमाणं तु महारूपधरं हरिम्।।

वामपादं प्रसार्यैव दक्षिणेन च सुस्थितम्।
सर्वाभरणसंयुक्तं हर्षवेगसमन्वितम्।।

एवमष्टभुजं कुर्यात् अथ वक्ष्ये चतुर्भुजम्।
चतुर्भुजं वा हस्ताभ्यां शङ्खचक्रधरं परम्।।

हस्तं दक्षिणमादानपरं चान्यं प्रसारितम्।
स्थितं च दक्षिणं पादं वाममूर्ध्वे प्रसारितम्।।

तत्प्रसारितपादोर्ध्वे हस्तं सम्यक् प्रसारितम्।
इन्द्रं छत्रधरं सम्यगाकाशे तु प्रकल्पयेत्।।

पार्श्वयोश्च यमं चापि वरुणं पूजकौ तथा।

-----------------------------------

त्रिविक्रमस्य ब्रह्माणमूर्ध्वपादं प्रगृह्य च।।

प्रक्षालनपरं कुर्यात् स्रोतोगङ्गां विहायसि।
प्राञ्जलीकृतहस्तं च नाभेरूर्ध्वशरीरगम्।।

तस्य पादोर्ध्वतः कुर्यान्नमुचिं भ्रममाणकम्।
स्थितपादं तु वामे च शुक्रं विघ्नकरं तथा।।

तदूर्ध्वे गरुडं कुर्याच्छुक्रं मुष्टिप्रहारकम्।
दक्षिणे तु स्थितं कुर्याद्वटुरूपं तु वामनम्।।

छत्रदण्डधरं पुण्यं शिखाकौपीनवाससम्।
पार्श्वे बलिं च दातारमञ्जलिभ्यां घटोदकम्।।

सर्वाभरणसंयुक्तं हर्षयुक्तं समाचरेत्।
नीलाभं जाम्बवन्तं च कारयेद्वानराकृतिम्।।

इन्द्रं श्यामनिभं कुर्याद्यममञ्जनसन्निभम्।
वरुणं श्यामवर्णं तमादित्यं चाग्निसन्निभम्।।

श्वेतं निशाकरं कुर्याद् ब्रह्माणं पीतवर्णकम्।
गङ्गां तु श्वेतवर्णाभां नमुचिं श्यामवर्णकम्।।

शुक्रं शुक्लनिभं कुर्याद् गरुडं पञ्चवर्णकम्।
वामनं च तथा श्यामं बलिं कनकसन्निभम्।।

एवं त्रिविधरूपं तु स्वेच्छया कारयेद् बुधः।

**क्रि. ११. ६३ - ७९**

[ अत्र 'शुक्रं श्वेतनिभं कुर्यात्' इति अधिकम्। ]

**वि. ५७. ३७४, ३७५**

[1]एतेषु यथेष्टं रूपं निश्चित्य, पूर्ववच्चतुर्विंशतितालविभागेन देवमष्टबाहुं चतुर्बाहुम्, अष्टभुजे दक्षिणहस्तैः चक्रशरासिधरं, वामहस्तैः शङ्खशार्ङ्गहलमुसलधरं, चतुर्भुजे दक्षिणेन चक्रधरं वामेन शङ्खधरम् अभयदानदक्षिणहस्तं प्रसारितपादेन प्रसारितवामहस्तं स्थितदक्षिणपादं प्रसारितोद्धतवामपादं श्यामाभं रक्ताम्बरधरं सर्वाभरणभूषितं, तत्पृष्ठे कल्पद्रुमम्, इन्द्रं, छत्रम्, उभयोः पार्श्वयोः जवनजलेशौ चामरधारिणौ तदूर्ध्वे दक्षिणे दिवाकरम् अदक्षिणे निशाकरं, तथा सनकसनत्कुमारौ च कृत्वा, प्रसारितपादस्योर्ध्वभागे ब्रह्माणं तत्पादं प्रगृह्य हस्ताभ्यां प्रक्षालयन्तं कृत्वा, तत्स्रोतसि गङ्गां श्वेताभां नाभेरूर्ध्वं शरीरभागां प्राञ्जलीकृतहस्तां च कारयेत्। पादपार्श्वे नमुचिं भ्रममाणं वामपार्श्वे शुक्रं विघ्नकरं, तं मुष्टिना प्रहरन्तं गरुडम्, दक्षिणे वामनं, तत्पार्श्वे बलिं हेमाभं सर्वाभरणभूषितं सपत्नीकं हर्षेण कराभ्यां हेमकलशमुद्धरन्तं तस्योर्ध्वे जाम्बवन्तं भेरीताडनपरं च कारयेत्।

**ज्ञा. ३७. ६९ ; १५७, १५८**

त्रिविक्रमं जानुसमं नाभिसमं वा उद्धृतैकपादं स्थितदक्षिणचरणं चतुर्बाहुं द्रुहिणक्षालितालम्बजह्नुकन्यायुतोद्धृतचरणं बलिं वामनयुतं वीशार्दितं भृगुं चन्द्रादित्यनमस्कृतम् ।

--------------------------------------------

--------------------------------------------

त्रिविक्रममष्टभुजं चतुर्भुजं द्विभुजं वा कारयेत्। भुजेषु दक्षिणेषु

1. त्रिविधरूपेषु

चक्रासिगदाशक्तिधरं वामेषु शङ्खशरशार्ङ्गखेटकधरम् अन्यवामहस्तमुद्धृतपादेन प्रसार्य तथैव स्थितं वामपादमुद्धृतदक्षिणेन सुस्थितं महावेगयुतं किरीटाद्याभरणभूषितमेवमष्टभुजम्। अथवा द्विहस्ताभ्यां चक्रशङ्खधरमन्येन दक्षिणेन जलादानपरं वाममुद्धृतपादेन प्रसार्य तथैव स्थितं महाहर्षयुतमेवं चतुर्भुजम्। अथवा दक्षिणेन जलादानपरं वामहस्तमुद्धृतपादेन सह प्रसार्य स्थितमेवं द्विभुजम्। त्रिविक्रमं केचिद् दिभुजं नेच्छन्ति। क्रमात्पादोद्धरणात् त्रयोऽपि त्रिविधा भवन्ति। प्रथमो द्वितीयस्तृतीय इति। भूलोकमानाय वामपादे जानुमात्रमुद्धृते प्रथमः। अन्तरिक्षलोकमानाय नाभिमात्रमुद्धृते द्वितीयः। स्वर्गलोकमानाय ललाटमात्रमुद्धृते तृतीयः। त्रिविक्रममेवं कारयित्वा तदुद्धृतपादतलं प्रगृह्य प्रक्षालनपरं पद्मस्थं ब्रह्माणं ततः संस्रवद्रूपां स्वर्गान्तरिक्षगामूर्ध्वावलम्बिनीं नाभेरूर्ध्वं शरीरिणीमधःस्रोतोरूपां प्राञ्जलीकृतद्विहस्तां श्वेताभां गङ्गामुद्धृतपादपार्श्वे भ्रममाणं दैत्यं श्यामाभं नमुचिं भेरीताडनपरं कपिमुखं नररूपं नीलाभं जाम्बवन्तम् अपरभित्त्यूर्ध्वभागे छत्रधरमाकाशस्थमिन्द्रं पार्श्वयोः चामरधरौ यमवरुणौ च स्थितपादाद्वामे अतिशयेन प्रह्वायमानं शुक्रं तदूर्ध्वे मुष्ट्या प्रहरन्तं गरुडं त्रिविक्रमस्य दक्षिणे श्यामवर्णं वटुरूपं द्विभुजं दक्षिणेनोदकादानपरं वामेन छत्राषाढधरं कौपीनवाससं वामनं दक्षिणे जलदानाय पाणिभ्यां कलशमुद्धृत्य स्थितं सुमुखं सर्वाभरणभूषितं सुवर्णवर्णं महाबलिं बूजकं कनकाभं कनकं शङ्खाभं शङ्किलं च मार्कण्डेयभृगू वा कारयेत्।

**खि. १९. ४० - ५४**

ललाटान्तोद्धृतेनाथ तृतीयेयं विशिष्यते।
वामहस्तं समुद्धृत्य पादपार्श्वे तु सूचयेत्।।

ब्रह्माणं पादपार्श्वे तु आकाशस्थं प्रकल्पयेत्।

उभाभ्यां चैव हस्ताभ्यां पादप्रक्षालनोद्यतम्।।

क्षणेन स्रुततोयां च गङ्गां देवीं सुरूपिणीम्।
तां वहन्तं वेगयुतां शङ्करं चैव कारयेत्।।

एवमेव प्रकारेण कारयेत्परितः प्रभोः।
वामपादस्य पार्श्वे तु गङ्गां कुर्याद्विचक्षणः।।

साचीकृतार्धवपुषा गङ्गां कुर्याद्विचक्षणः।
गङ्गा स्यात् श्वेतवर्णा तु सर्वाभरणभूषिता।।

बाहुदक्षिणतश्शक्रं वनमालासमन्वितम्।
चन्द्रं शशधरं चापि कुर्याद् भूषणभूषितम्।।

देवेन्द्रं चैव कृत्वा तु सर्वाभरणभूषितम्।
बाह्ने वामे तथेन्द्रस्य चामरे परिकल्पयेत्।।

कुर्यात् बाहुसमस्थाने नमन्तं देवमादरात्।
दक्षिणे स्तनपार्श्वे तु चन्द्रं सम्यक् समाचरेत्।।

तथैव वामपार्श्वे तु भस्कारं भित्तिमाश्रितम्।
जानुस्थानगतं कुर्यात्पृष्ठे मण्डलसंयुतम्।।

देवस्य दक्षिणे पार्श्वे वामनं बलिसंयुतम्।
महाबलिं च कुर्वीत सर्वाभरणभूषितम् ।।

उभाभ्यां चैव हस्ताभ्यां दधतं सोदकं घटम्।
वामनं कारयेत्पञ्चतालमानेन वामनम्।।

सोत्तरीयपरीधानं कृष्णाजिनधरं विभुम्।
छत्रदण्डसमायुक्तं याचमानमुखाम्बुजम्।।

देवस्य वामभागे तु भूमिस्थं गरुडं चरेत्।
शुक्रमुद्दिश्य हस्तेन घ्नन्तं कोपसमन्वितम्।।

देवस्य मूर्धभागे तु जाम्बवन्तं प्रकल्पयेत्।
भेरीसन्ताडने व्यग्रं जयार्थं मधुघातिनः।।

एवमेतान् कल्पयित्वा शेषं युक्त्या समाचरेत्।
नवस्थानेषु विधिना क्रममाणं च कारयेत्।

**वि.५७. ३७४ , ३७५**

[ अत्र बलिं सपत्नीकं हेमकलशमुद्धरन्तम् इत्यधिकम्। ]

**प्र. १४. ८ - ३६**

दशतालेन मानेन देवदेवं प्रकल्पयेत्।
सव्यं पादं स्थितं कुर्यात् दक्षिणं चोत्थितं भवेत्।।

चतुर्भुजं प्रकुर्वीत संयुतं वाष्टभिर्भुजैः।
दक्षिणे शार्ङ्गमालम्ब्य भूम्यां चैव प्रसार्य च।।

शरं च दक्षिणे हस्ते खड्गं चैव तथा भवेत्।
गदा वामकरे प्रोक्ता तथा खेटकमेव च।।

शङ्खचक्रे तथा कुर्यात् ऊर्ध्वबाह्वोर्विचक्षणः।
एवमेव प्रकुर्वीत वसुहस्तं प्रकल्पयन्।।

सस्यश्यामनिभं कुर्यात् हर्षवेगसमन्वितम्।
सर्वाभरणसंयुक्तं किरीटादिविभूषितम्।।

इन्द्रं सस्यनिभं कुर्यात् वामपार्श्वे च सुस्थितम्।
दक्षिणे धर्मराजं च पुष्पमालाधरं पुनः।।

दक्षिणे भित्तिपार्श्वे तु ब्रह्माणं च प्रकल्पयेत्।
हस्ताभ्यां कुम्भयोश्चैव पादप्रक्षालनं चरेत्।।

तस्य पादाम्बुजे चैव जातां गङ्गां च सुन्दरीम्।
प्राञ्जलीकृत्य हस्ताभ्यां नाभेरूर्ध्वं शरीरगौ।।

पार्श्वयोरुभयोश्चापि चन्द्रादित्यौ च पूर्ववत्।
जाम्बवन्तं तथा भेरीं ताडयन्तं नराकृतिम्।।

इन्द्रं श्यामनिभं कुर्यात् यममञ्जनसन्निभम्।
आदित्यं चाग्निवर्णं च चन्द्रं श्वेतं तथा चरेत्।।

पीतवर्णं बलिं कुर्यात् नीलाभं जाम्बवन्तकम्।
ब्रह्माणं पीतवर्णं च श्यामवर्णां च जाह्नवीम्।।

एवं वर्णक्रमेणैव चित्राभासं च कारयेत्।
पूजकौ तु प्रकुर्वीत तथा शुक्रबृहस्पती।।

शङ्खं दक्षिणतः कुर्यात् चक्रं वामे समर्चयेत्।
अमूर्तं वा समूर्तं वा कल्पयित्वा यथाक्रमम्।।

शुक्रं शुक्लनिभं कुर्यात् पीतवर्णं बृहस्पतिम्।
महीं दक्षिणतः पार्श्वे स्थितामेवं प्रकल्पयेत्।।

उदङ्मुखीं च कुर्वीत पद्महस्तां च दक्षिणे।
वामे प्रसारितां चैव सर्वरत्नविभूषिताम्।।

तस्याः पूर्वे तथा कुर्यात् प्रह्लादं चोत्तरामुखम्।
जटामकुटसंयुक्तं सर्वाभरणभूषितम्।।

हृदयेऽञ्जलिसंयुक्तं शुकपत्रनिभाम्बरम्।

तस्य चोत्तरपार्श्वे तु ब्रह्मसूत्रस्य दक्षिणे।।

असुरेन्द्रं तथासीनं विनतं पश्चिमामुखम्।
ब्रह्माञ्जलिसमायुक्तं किरीटादिविभूषितम्।।

एवं वैरोचिनीं कुर्यात् पुष्पाम्बरधरं परम्।
नमुचिं च समासीनं पादपीठावलम्बिनम्।।

वामपार्श्वे समासीनं पूर्वभित्तिसमाश्रयम्।
कल्पयित्वा यथामार्गं शुक्रं चैव समागतम्।।

वामपादं समासीनं दक्षिणं कुञ्चितं तथा।
अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम्।।

सर्वाभरणसंयुक्तं पश्चिमामुखमेव च।
तस्य चोत्तरपार्श्वे तु पक्षिराजं प्रकल्पयेत्।।

दक्षिणामुखसंयुक्तं शुक्रे मुष्टिप्रहारिणम्।
एवं गर्भगृहे प्रोक्तं विधिना कारयेद् बुधः।।

मण्डपे निम्नितस्थाने अनन्तं चोत्तरामुखम्।
हृदयेऽञ्जलिसंयुक्तं स्थितमेवं प्रकल्पयेत्।।

फणैस्तु पञ्चभिर्युक्तं सर्वाभरणभूषितम्।
उत्तरे भित्तिपार्श्वे तु वासुकिं च प्रकल्पयेत्।।

अनन्तवत्तथा कुर्यात् हर्षवेगसमन्वितम्।
एवमेव विधानेन कल्पयित्वा यथाक्रमम्।।

श्यामवर्णां तथा देवीं प्रह्लादं पीतमेव च।
कनकाभं बलिं चैव नमुचिं च तथैव च।।

शुक्रं च पूर्ववत् कुर्यात् पञ्चवर्णं खगाधिपम्।
अनन्तं पीतवर्णं च वासुकिं श्याममेव च।।

एवं स्थानक्रमेणैव कूटयुक्तेन कारयेत्।
अथ वा भित्तिपार्श्वे तु चित्राभासेऽधमाधमम्।।

**वा. २०.**

------------त्रिविक्रमं दैविके पदे।।

उक्तमानं ध्रुवे चैव ध्रुवबेरं त्रिविक्रमम्।
मानोन्मानप्रमाणादि उत्तमं दशतालकम्।।

चतुर्भुजं द्विभुजं वापि ततश्चाष्टभुजेन वा।
हस्ते दक्षिणपार्श्वे तु गदाचक्रासिशक्तिधृत्।।

तथैव वामपार्श्वे तु शङ्खशार्ङ्गशरं पुनः।
खेटकं चायुधाष्टौ तु सव्यहस्ते विचक्षणः।।

वामेनोद्धृतपादेन दक्षिणाधः प्रसारितम्।
उक्तं सूची तथा कुर्यात् हस्तं पूर्वविधानतः।।
उद्धृत्य वामपादस्तु सुस्थितेन च दक्षिणम्।
अतिवेगसमायुक्तं भूषितं सर्वभूषणैः ।।

एवं भुजाष्टकं प्रोक्तं चतुर्भुजमथोच्यते।
दक्षिणं हि जलादानं पूर्ववदितरं भवेत्।।

उभाभ्यां च कराभ्यां च शङ्खचक्रं तु कारयेत्।
द्विभुजं चात्र वक्ष्ये शृणुध्वं शास्त्रचोदितम्।।

द्विभुजं दक्षिणेनैव पादं जलपरं भवेत्।

वामेनोद्धृतपादेन प्रसारितेतरं भवेत्।।

द्विभुजं भूतिकामी स्याद्राज्यकामी चतुर्भुजम्।
भुजमष्टं तु विजयी सर्वकामं सुखी लभेत्।।

समतित्रयलोकस्य उद्धृतश्चैव पादयोः।
ब्रह्मलोकं समासाद्य ब्रह्मणः पुरतो धृतम्।।
पादप्रक्षालनपरं विधात्रापरमेष्ठिनौ।
प्रक्षालनात्परिभ्रष्टा गङ्गाद्यैः श्रोतरूपिणी।।

दैत्ये भ्रममानेन समुचितं श्यामरूपिणम्।
जाम्बवं भ्रममाणं तु वल्लरीताडनं चरेत्।।
लोकपालांश्च कृत्वैव प्राञ्जलीकृतमाचरेत्।।

मुष्टिप्रहरणे वामे शुक्रं दानविरोधिनम्।
प्रहरं तु गरुत्मन्तं करेणैव तु दक्षिणे।।

दक्षिणे वामनस्यैव जलदानपरं बलिम्।
हेमवर्णं प्रकल्प्यैव सर्वभूषणकैर्युतम्।।

प्रवालाभां तु देवीं च दक्षिणे च सुलोचनाम्।
महाहर्षसमायुक्तं महाबलिकरेण च ।।

करमुद्धृत्य पाणिभ्यां धारया दानतत्परः।
कनकाभं भुजं कृत्वा शङ्खाभं शङ्करं भवेत्।।

भृगुं च मार्कण्डेयं च विधिना कारयेद् बुधः।

### ४.८.७६ त्रिविक्रमध्रुवबेरस्य त्रिविधं मानम्

**खि. १९. ७६ - ७८**

रम्यं मनोहरं बिम्बं देवदेवस्य कारयेत्।।

------------------------------

अध्यर्धद्वारोन्नता स्यादुत्तमा प्रतिमा तथा।
पादाधिकां वा कुर्वीत द्वारमानमथापि वा।
बिम्बं सलक्षणं कुर्याद्दशतालोक्तमानतः।।

### ४.८.७७ फलभेदेन युगभेदेन वर्णभेदेन च त्रिविक्रमध्रुवबेरस्य वर्णभेदः

**खि. १९. ५४ - ६०**

मोक्षार्थी श्वेतवर्णं च पीतवर्णं तु पुत्रधीः।।

धनधान्यसमृद्ध्यर्थी श्यामं कुर्यात् त्रिविक्रमम्।
वीर्यार्थी विजयार्थी च रुक्मवर्णं समाचरेत्।।

कृतत्रेताद्वापराश्च कलिश्चेति युगाः क्रमात्।
श्वेतवर्णं पीतवर्णं श्याममञ्जनसन्निभम्।।

यथाक्रमं प्रकुर्याद्वै युगेषु च विशेषतः।
ब्राह्मणो यजमानश्चेत् श्वेतवर्णः प्रशस्यते।।

क्षत्रियश्चेद्रक्तवर्णः वैश्यश्चेत्पीत आदृतः।
शूद्रश्चेदञ्जनो वर्णः सर्वेषां श्याम एव वा।।

एवं वर्णं यथावाञ्छं कारयेत्तु त्रिविक्रमम्।
पुराकल्पोक्तमानेन मानोन्मानादि चाचरेत्।।

सर्वलक्षणसंयुक्तं कारयेच्छिल्पिना शुभम्।

**४.८.७८ परशुरामावतारस्वीकारे उद्देशः**

**स. ६०. १ - ३**

ततः कालेऽप्यतीते तु भूमिर्भारावपीडिता।
दुरात्मभिश्च बहुभी राजभिर्धरणीश्वरैः।।

तद्वधाय कृतोद्योगो जमदग्निसुतो हरिः।
भूत्वावतीर्णो लोकेऽस्मिन् भारनिर्हरणाय वै।।

परशुं च गृहीत्वैव नृपान् सर्वान् प्रगृह्य च।
जघान किल सर्वांश्च रामो भीमपराक्रमः।।

**ज्ञा. ८३. १५९ ; प्र. १५. १ - ३ ; क्रि. ११. ८१**

**४.८.७९ परशुरामध्रुवबेरप्रतिष्ठाया उद्देशः**

**ज्ञा. ३७. ६९**

जामदग्न्यं धर्मवृद्धिसुखाकाङ्क्षी -----------

**४.८.८० परशुरामध्रुवबेरालयनिर्माणे वास्तुविशेषाः**

**वा. २१ .**

ग्रामाद् बाह्ये विविक्ते वा महादिक्ष्वष्टकेऽपि वा।।
नदीतीरेऽब्धिपार्श्वे वा पुण्यक्षेत्रे मनोरमे।

**४.८.८१ परशुरामध्रुवबेरस्थापने विमानविशेषाः**

**ज्ञा. ८३. १५९**

देवं जमदग्निरामं फेलाकारे अङ्गनाकारे श्रीप्रतिष्ठितके महाशङ्खे वा विमाने तपोज्ञानजयार्थी स्थापयेत्।

**प्र. १५. ४ ; वा. २१ .**

**स. ६०. ४**

[ अत्र मालाकारविमाने इति विशेषः। ]

## ४.८.८२ परशुरामध्रुवबेरलक्षणम्

**स. ६०. ५ - ७**

दशतालेन तं रामं भुजद्वयसमायुतम्।
दक्षिणे परशुं हस्ते वाममुद्देश्यकं तथा।।

रक्तवर्णं प्रकुर्वीत जटामकुटभूषितम्।
नीलाम्बरधरं देवमेकवीरक्रमेण च।।

आसीनं वा स्थितं वापि कारयेत विधानतः।
---------------- ॠषी तत्परितो लिखेत्।।

**ज्ञा. ८३. १५९ , क्रि. ११. ८२. ८४**

**वि. ५८ . ३७५ , ३७६**

जमदग्निरामं मध्यमं दशतालमितं द्विभुजं रक्ताभं श्वेतवस्त्रधरं दक्षिणेन हस्तेन परशुधरम् उद्देश्यवामकरं जटामकुटधरं सोपवीतं सर्वाभरणभूषितं स्थितमेव कारयेत्।

**प्र. १५. ५ - ७**

**वा. ३१ .**

[ अत्र उपवीताभरणैः युक्तम् इति विशेषः। ]

**खि. १९. ७९**

जामदग्न्यं जटोपेतं धनुःपरशुपाणिनम्।
अक्षमालाधरं रक्तवल्कलावासमर्चयेत्।
शिष्यावपि समायोज्यौ पावनो जवनो मुनी।।

### ४.८.८३ रामावतारस्वीकारे उद्देशः

**स. ६०. १३ - १५**

राक्षसैर्बहुभिर्मुख्यै रावणादिमहाबलैः।
देवाः सम्पीडितास्सर्वे मुनयश्चाखिलास्तथा।।

त्रिदिवैर्मुनिभिस्सर्वैः संस्तुतो हरिरव्ययः।
तद्वधाय कृतोद्योगो मानुषं रूपमास्थितः।।

दशरथस्य सुतो भूत्वा सोऽवधीत्तांस्तु राक्षसान्।
हत्वा दाशरथी रामस्सर्वलोकमपालयत्।।

**प्र. १५. १० - १३ , ज्ञा. ८३. १५९**

### ४.८.८४ रामध्रुवबेरप्रतिष्ठाया उद्देशः

**प्र.-१५ . १४**

पुष्ट्यर्थी विजयार्थी च वीर्यार्थी च विशेषतः।

**ज्ञा. ८३. १६०**

**ज्ञा. ३७. ६९**

रामं योगार्थी।

**वा. २१.**

**खि. १९. , ८०**

विजयार्थी प्रजार्थी च मोक्षार्थी राममर्चयेत्।।

### ४.८.८५ रामध्रुवबेरालयनिर्माणे वास्तुविशेषाः

**खि. १९. ८१, ८२**

ग्रामे वा नगरे वाथ पत्तने वाथ खर्वटे।

नद्यास्तीरे तटाके वा पर्वताग्रे वनाश्रये।।

नद्योर्मध्ये तथा तीरे वेलायां सागरस्य वा।
स्थानेष्वेतेषु दैवेषु प्रतिष्ठाप्य समर्चयेत्।।

**वा. २१.**

[ अत्र सेनानिवेशने पश्चिमे इति विशेषः। ]

**स. ६०. १६**

आलये मण्डपे वापि कूटे वापि तथैव च।
देवं रामं च रक्षार्थं स्थापयेच्च विधानतः।।

**४.८.८६ रामध्रुवबेरस्थापने विमानविशेषाः**

**ज्ञा. ३७. ६९**

श्रीप्रतिष्ठितके महाशङ्खे वा रामं सीतासौमित्रियुतं हनुमद्भरताभ्याम्।

**ज्ञा. ८३. - १६०**

एवं सायुधं रामं फेलाकारे अङ्गनाकारे त्रिकूटे स्वस्तिके चतुःष्फुटे विमाने मण्डपे वा प्रतिष्ठाप्य अर्चयेत्।

**वा. २१.**

[ कूटागार इति विशेषः। ]

**प्र. १५. १४ , १५**

[ वासाधिकारवत्। ]

**खि. १९. ८३ - ८५**

कर्षणं विधिवत्कृत्वा खननं पूरणादिकम्।
आद्येष्टकादिकरणं पूर्वोक्तविधिना चरेत्।।

कुर्यादेकतलं वा स्यादेकगोपुरसंयुतम्।
विमानं गोपुराद्यैस्तु विधिवन्निर्मितं हरेः।।

विमानं हस्तिपृष्ठं वा प्रशस्तं गोपुराकृति।
निर्माय श्रद्धया दिव्यमालयं शुभलक्षणम्।।

### ४.८.८७ रामध्रुवबेरं द्विविधम्

**ज्ञा. ८३. १५९**

एष सायुधो निरायुधश्चेति द्विविधो भवति।

**क्रि. ११. ८७**

### ४.८.८८ मृण्मयरामध्रुवबेरनिर्माणे शूलस्थापनादिविधानम्

**खि. १९. ८६, ८७**

विधिना शूलमादाय शूलस्थापनमाचरेत्।
दशतालेन मानेन बेरन्यासः प्रशस्यते।।

मृत्क्रियां रज्जुबन्धं च घटशर्करिकाक्रियाम्।
पटाच्छादनसंस्कारं वर्णसंस्कारमेव च।।

### ४.८.८९ रामध्रुवबेरस्य त्रिविधं नतमानम्

**वि. ५८. ३७६, ३७७**

आभङ्गं समभङ्गमतिभङ्गमिति त्रिविधं नतमानम् ।

आभङ्गस्य त्रिमात्रम् -------। एतेषां पादाङ्गुष्ठान्तरमष्टादशाङ्गुलं विंशत्यङ्गुलं क्रमेण तत् त्रिभागैकपार्ष्ण्यन्तरमापादतलमस्तकं मध्यसूत्रस्य मूर्ध्नः पार्श्वे वामनेत्रसितमण्डले वामनासापुटेऽधराहनोर्वामपार्श्वे सव्यस्तनस्य दक्षिणपार्श्वे नाभेर्दक्षिणे वामोरुदक्षिणपार्श्वे वामाङ्घ्रिपार्श्वे प्रलम्बयेत्। एतदाभङ्गसूत्रम्। समभङ्गस्य वेदाङ्गुलम् ।----------------------समभङ्गस्य मुखं त

(थो) च्चोक्तं वामस्तनपीठपार्श्वे नाभिमध्ये ऊरुमध्ये पार्ष्ण्यमध्ये तु प्रलम्बयेत्। एतत्समभङ्गसूत्रम्। अतिभङ्गस्य शराङ्गुलम्।------------- अतिभङ्गस्य मुखं पूर्ववन्नाभेर्वामे वामोरुमध्ये पार्ष्ण्यन्तरे च लम्बयेत्। एतदतिभङ्गसूत्रम्। शेषं पूर्ववत्। अधिकात् हिक्कासूत्रात् स्तनं द्विमात्रं सूत्रान्नाभि द्विमात्रं सूत्रान्मात्रार्धं जानुनी प्रमते (प्रमिति मति) भङ्गे अन्यसूत्रनिम्नं युक्तितः कारयेत्।

### ४.८.९० सपरिवारस्य सायुधस्य रामध्रुवबेरस्य लक्षणम्

**खि. १९. ८८ - ९३**

आचरेत् द्विभुजं देवं धनुर्हस्तं त्रिभिर्नतम्।
श्यामवर्णं मकुटिनं सर्वाभरणभूषितम्।।

श्रीवत्सवक्षसं कुर्यात्पीताम्बरसुशोभितम्।
रामः कमलपत्राक्षस्सर्वसत्त्वमनोहरः।।

वामभागे च सौमित्रिं दक्षिणे जनकात्मजाम्।
रामबाहुसमौ तत्र कारयेद्विधिकोविदः।।

हेमवर्णां पद्मनेत्रां शुकपिच्छनिभाम्बराम्।
सीतां पद्मकरां कुर्यात्सौमित्रिं च धनुर्धरम्।।

हनुनाऽञ्जनवर्णेन रक्तवर्णमुखेन च ।
श्वेतवस्त्रेण चैकेन अष्टतालविधौ कृतम्।।

हनूमन्तं महाभक्तं कारयेत्पुरतः स्थितम्।
एष सायुधकल्पस्स्यात् -----------।

**स. ६०. १७ - २४**

सार्धाष्टतालमानेन रघुरामं प्रकल्पयेत्।

द्विभुजं श्यामवर्णं च त्रिभङ्गेन च सुस्थितम्।।

शरं दक्षिणहस्तेन चापं वामेन धारिणम्।
सर्वाभरणसंयुक्तं किरीटमकुटान्वितम्।।

पीतवर्णां तथा चैव सर्वाभरणभूषिताम्।
पद्मं वामेन हस्तेन गृहीत्वा दक्षिणं करम्।।

प्रसार्यैव स्थितां देवीं सीतां दक्षिणतस्तथा।
वामे च लक्ष्मणं कुर्यादष्टतालेन मानतः।।

कारयेत्तं शरं चापं धारयन्तं स्थितं तथा।
सर्वाभरणसंयुक्तं रुक्मवर्णं च लक्ष्मणम्।।

पिङ्गलाभं हनूमन्तं विज्ञापनपरं कपिम्।
दक्षिणेन करेणास्यं पश्चादन्येन वाससम्।।

ऊरुमध्येऽवकुण्ठ्यैव दीनमूर्ध्वाननं स्थितम्।
दक्षिणे कपिराजं वा कृत्वा तद्रूपमर्चयेत् ।।

एवं सायुधमार्गं तु ----------------।

**क्रि. ११. ८६ - ९८**

**ज्ञा. ८३ . १५९**

सार्धनवतालेन मानेन राघवरामं श्यामाभं, द्विभुजं, दक्षिणेन पाणिना तीक्ष्णशरधरं, वामेन धनुर्धरं, किरीटमकुटादिसर्वाभरणभूषितं त्रिभङ्गं, सीतां दक्षिणे अष्टतालमानेन देवीं द्विभुजां वामेन पद्मधरां दक्षिणमधः प्रसार्य तथैव स्थितां, देवस्य वामे लक्ष्मणं पीताभं रामवत्तथा शरधनुर्धरं किञ्चिद्वामे स्थितं, प्रमुखे वार्ताविज्ञापनपरं कपिरूपं द्विभुजं पिहितास्यं वामेन स्वाम्बरावकुण्ठनपरं हनूमन्तं च कारयेत्।

## ४.८.९१ सीतादिध्रुवबेराणां लक्षणम्

### प्र. १५. ४८ - ५१

जानकीं समभङ्गेन वामहस्तेन पुष्पधृत्।
दक्षिणं सम्प्रसार्यैव रुक्मवर्णां तु कारयेत्।।

श्यामवस्त्रधरां चैव दिव्यस्त्रीमण्डनोपमाम्।
लक्ष्मणं समभङ्गेन तप्तकाञ्चनसन्निभम्।।

भरतं श्यामवर्णं तु शत्रुघ्नं तु सुवर्णकम्।
लक्ष्मणस्याथ वामे तु स्थितौ बाणधनुर्धरौ।।

हनूमन्तं पिङ्गलाभं वार्ताविज्ञापने परम्।
एवं सायुधवर्गं तु --------------।।

### वा. २१.

[ अत्र सुग्रीवादिहरीन् सर्वान् इति अधिकम्। ]

## ४.८.९२ रामध्रुवबेरस्य गर्भद्वारमानम्

### प्र. १५. २०, २२ - २५

गर्भद्वारविमानाभ्यां बेरमानमिहोच्यते।।

---------------------------

इष्यते गर्भमानं तु पुष्यमानं(? ) विभज्य च।
उत्तमं पञ्चभागं तु चतुर्भागं तु मध्यमम्।।

त्रिभागमधमं प्रोक्तं यथावच्छास्त्रवित्तमाः।
गर्भमानं प्रवक्ष्यान्ति द्वारमानं तु वक्ष्यते।।

सप्तभागे चतुर्भागमुत्तमं तु विधीयते।

त्र्यंशं तु मध्यमं प्रोक्तमर्धांशमधमं भवेत्।।

द्वारमानमिदं प्रोक्तं क्रियायां तु विशेषतः।

### ४.८.९३ सपरिवाररामध्रुवबेरस्य तालमानम्

**प्र. १५. १६ - २०**

अथातः सम्प्रवक्ष्यामि रामलक्ष्मणलक्षणम्।
सीताया वायुपुत्रस्य भरतस्यानुजस्य च।।

मानोन्मानप्रमाणानि वक्ष्ये सङ्क्षेपतः क्रमात्।
उत्तमं दशतालेन मध्यमेन यथाक्रमम्।।

उत्तमं राघवेन्द्रस्य मध्यमं लक्ष्मणस्य तु।
अनेनैव तु मानेन सीतायास्तूच्छ्रयो भवेत्।।

नवतालेन मानेन वायुपुत्रं प्रकल्पयेत्।
अधमं दशतालेन भरतस्यानुजस्य च।।

एवं युक्तियुतेनैव क्रियते शास्त्रवित्तमैः।

### ४.८.९४ सपरिवारस्य रामस्य ध्रुवबेरमानम्

**वि. ५८. ३७६, ३७७**

अथ राघवं रामं सविंशतिशताङ्गुलमितं द्विभुजं त्रिनतस्थितं दक्षिणेन हस्तेन शरधरं, वामेन चापधरं, श्यामाभं, रक्ताम्बरधरं किरीटाद्याभरणान्वितं कारयेत् --------------------------------दक्षिणहस्तस्य तलाग्रं नाभिदघ्नं श्रोणीदघ्नं वामकोर्परान्तरं पार्ष्ण्यन्तरसमं वामहस्तं सचापम् उष्णीषद्वयस्योन्नतं तस्य नीव्रं मुखद्वलयं मौलिपार्श्वे धनुस्थितं राघवं कारयेत्। सीतां देवस्य बाहुसमां देवस्योननवार्धतालेन मानेनाभङ्गवशाद्रुक्माभां शुकपक्षनिभाम्बरां

सर्वाभरणभूषितां धम्मिल्लबन्धयुतां करण्टिकामकुटयुतां वामहस्तेनोत्फुल्लपद्मधरां प्रसारितदक्षिणहस्तां देवस्य दक्षिणपार्श्वे किञ्चिद्देवं समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत्। कटकाग्रस्योत्सेधं स्तनाक्षसमं नाभेर्मणिबन्धान्तरं सार्धत्रयोदशाङ्गुलं पार्श्वमध्यबाह्वन्तरं सप्ताङ्गुलं प्रसारितकरतलमध्योर्वन्तरं द्विमात्रं तच्छ्रोणीबन्धान्तरं चतुरङ्गुलं पार्श्वमध्यं बाह्वन्तरं रसाङ्गुलं शेषं युक्त्यैव कारयेत्। वामपार्श्वे सौमित्रिं देवस्य कर्णान्तं बाह्वन्तं वा कनिष्ठदशतालेन समभङ्गवशान्मुखमध्यर्धार्काङ्गुलं एव (मि) मष्टाननं भागचतुष्टयमन्यत्सर्वं पूर्ववत्। उद्दिष्टमुद्बन्धकुन्तलं युवराजभूषणान्वितं द्विभुजं रामवत् शरचापधरं सुवर्णवर्णं श्यामाम्बरधरं समभङ्गान्वितं कारयेत्। हनूमन्तं प्रमुखे किञ्चिद्दक्षिणमाश्रित्य स्थितं देवस्य स्तनान्तं नाभ्यन्तं ऊरुमूलान्तं वा सप्ततालमितं द्विभुजं दक्षिणेन हस्तेन आस्यं वामेन स्ववस्त्रं च पिदधानं किञ्चिदूर्ध्वाननं कारयेत्। मूर्ध्नः कला भ्रूवन्तं, तस्माद्वक्त्रलामात्रत्रयं नासिकान्तं तथाऽधरं मात्रं कण्ठं दशाङ्गुलं हृदयं हृदयान्नाभ्यन्तं नाभेर्मेढ्रान्तं च तस्मादूर्वन्तं विंशतिमात्रं जानुं द्व्यङ्गुलं जङ्घा सप्तदशाङ्गुलं कलातलं तदायामं दशाङ्गुलं बाहुं विंशत्यङ्गुलं तच्चतुर्थैरहीनं प्रकोष्ठतलं पादायामसमं शेषाङ्गं, नरस्योक्ततारान्मात्रोनम्, ऊरोर्बाह्वोः कटिमध्ये श्रोण्यां च कलोनं पादमात्राविहीनं शरार्धाङ्गुलहीनम् अङ्गुलिद्वियवहीनमत्रानुक्तं सर्वं युक्त्यैव कारयेत्।

## ४.८.९५ सीतालक्ष्मणयुतरामस्य ध्रुवबेरमानम्

**वा. २१.**

पूर्वोक्तेन विधानेन ध्रुवं कौतुकसंयुतम्।
रामं तद् ध्रुवबेरं तु सीतालक्ष्मणसंयुतम्।।

ध्रुवबेरोक्तमार्गेण ध्रुवं तत्र प्रकल्पयेत्।

समं वा पादहीनं वा गर्भागारस्य विस्तृतम्।
तस्यार्धं वा प्रकर्तव्यं हर्म्यभागोच्छ्रयं तथा।।

द्वारस्य शुद्धस्याध्यर्धं पादहीनं समं तु वा।
एकपञ्चदशाधिक्यमानं मानाङ्गुलं भवेत्।।
सप्ताष्टाङ्गुलमानेन द्विद्विरङ्गुलवर्धनात्।
मानेन यजमानस्य हस्तैकेनैव कारयेत्।
यजमानसमं वापि कारयेल्लक्षणान्वितम्।।

### ४.८.९६ लक्ष्मणादिध्रुवबेराणामुच्छ्रायः

**प्र. १५. २५, २६**

रामस्याथ ललाटान्तं नासान्तं लक्ष्मणोच्छ्रयम्।।

आस्यान्तमथ वा कुर्यात् वायुपुत्रस्य लक्षणम्।
भरतस्यानुजस्यापि तथा गलसमं भवेत्।।

### ४.८.९७ रामबिम्बस्य अङ्गप्रत्यङ्गमानम्

**प्र. १५. २७ - ४७**

उष्णीषात्पादपर्यन्तं चतुर्विंशच्छताङ्गुलम्।
षष्टिद्विगोलकं विद्यादेकत्र्यंशत्रिभागिकम् ?।।

तालानि दशभागैकम् उत्तमं दशतालकम्।
चतुर्भागाष्टभागं स्यात् चतुस्तालं तथैव च।।

दशतालस्य त्र्यंशेन उत्तमं मध्यमाधमम्।
मध्यमादधमं हीनं मुखे वार्धाङ्गुलक्षयम्।।

उष्णीषमङ्गुलं नेत्रं शिरस्यङ्गुलमिष्यते।

ललाटे हनुपर्यन्तं त्रयोदशार्धाङ्गुलं भवेत्।।

गलं चतुर्यवाः प्रोक्ता ग्रीवा सार्धत्रियङ्गुला।
हिक्का हृदयनाभ्यन्तं मेढ्रमूलं मुखत्रयम्।।

मुखायामं चतुर्मात्रं लिङ्गं पञ्चाङ्गुलायतम्।
नाभिरर्धाङ्गुलं ज्ञेयं निम्नार्धवरितालका(?)।।

श्रोणीभागार्धमेवं स्यात् कटिः पञ्चाङ्गुलं भवेत्।
मेढ्रमूलादि जान्वन्तं सप्तविंशतिकाङ्गुलम्।।

जानुभागमिति प्रोक्तं जङ्घोरू सुसमायुतौ।
चरणं चतुरङ्गुल्यं मनोर्देशविधानतः।।

ब्रह्माङ्गुलमुखायामं त्रयोदशाङ्गुलमेव च।
कनिष्ठाङ्गुलमायाममेकादशाङ्गुलं भवेत्।।

अक्ष्णामुष्णीषपर्यन्तं भागार्धाङ्गुलमुच्छ्रयम्।
हिक्कासूत्रान्तमेवं स्यात् स्कन्धमूलद्वयं भवेत्।।

स्कन्धं भुजसमोत्सेधं भुजोर्ध्वं गोलकं भवेत्।
भुजद्विमुखमायामं कूर्परं च कलायतम्।।

प्रकोष्ठं विंशदङ्गुल्यं हस्तायाममिति स्मृतम्।
नास्यानि नाभिवामेभ्यो रक्षान्तं सूत्रदक्षिणम्।।

आदिसूत्रमिदं प्रोक्तमन्यत्सूत्रं च कारयेत्।
ईषत्कुञ्चितमात्रं तु मात्रार्धं समकुञ्चितम् ।।

द्विकलाकुञ्चितं ज्ञेयं त्रिविधं कुञ्चितं भवेत्।
पार्ष्ण्योरन्तरसंयुक्तं पञ्चाङ्गुलसमन्वितम्।।

पादाङ्गुष्ठान्तरं चैव त्रयोदशाङ्गुलं भवेत्।
उष्णीषात्पार्श्वकर्णान्तं वामहस्तोच्छ्रयं भवेत्।।

नीव्रं कण्ठयवानां तु द्विमुखं विस्तरं भवेत्।
दक्षिणे लम्बहस्तं तु ऊरुमूलौ समं भवेत्।।

नीव्रं पञ्चाङ्गुलं चैव त्रयोदशाङ्गुलमीरितम्।
हस्तं तु द्व्यङ्गुलं चेति कटिबाहू षडङ्गुलम्।।

त्रियुजा कुञ्चितं स्थित्या त्रिभङ्गाग्रविराजितम्।
दक्षिणे कटिदेशे तु वाममक्षान्वितं भवेत्।।

दक्षिणं मुखमाश्रित्य त्रिभङ्गाङ्गमथोच्यते।
शृङ्गारगुणसंयुक्तं किरीटं वा विशेषतः।।

वज्रं पुलिङ्गवायुक्तं मकरकुण्डलसंयुतम्।
किरीटमुकुटौ ज्ञेयौ हारकेयूरसंयुतम्।।

उष्णीषं केशपृष्ठान्ते त्रयोदशाङ्गुलमायतम्।
ग्रीवायां मध्यमं भागं ककुद्भागात्क्रमोन्नतिः।।

## ४.८.९८ सपरिवारस्य निरायुधस्य रामध्रुवबेरस्य लक्षणम्

**ज्ञा. ८३. १६०**

सिंहासने वामं पादमाकुञ्चितं दक्षिणं प्रसार्य हस्तं दक्षिणमभयं वामं कट्यवलम्बनपरमासीनं देवं तद्दक्षिणे पार्श्वे देवीं द्विभुजां वामेन पद्मधरां दक्षिणं कट्यां न्यस्य पादं वाममाकुञ्च्य दक्षिणं प्रसार्य देवं किञ्चिदुद्वीक्ष्य सहर्षमासीनां सीतां च तत्सिंहासनादधस्ताद्वामतः प्राञ्जलीकृत्य स्थितं लक्ष्मणं दक्षिणे तथा हनूमन्तमेवं निरायुधम्। भरतशत्रुघ्नाभ्यां श्यामपीताभ्यां तथैव स्थितं लक्ष्मणं सिंहासनादधस्तात् आसीनं वेति केचित्। एवं निरायुधं

राघवं देवं सत्पुत्रदयासत्यतपःश्रीकामः स्थापयेत्।

**स. ६०. २४ , २५**

[ मार्ताण्डाभं हनूमन्तम् इति विशेषः। ]

**क्रि. ११. ९४, ९५ ; प्र. १५. ५२.**

**वा. २१.**

[ हनुमान् प्राञ्जलिश्चैवेति विशेषः। ]

**खि. १९. ९३ - ९५**

---------- अन्यश्चास्ति निरायुधः।

सिंहासने सहासीनं सीतया रघुनन्दनम्।।

श्यामलाङ्गं मकुटिनं सर्वाभरणभूषितम्।
श्रीवत्सवक्षसं कुर्याद्दशतालेन मानतः।।

वामपार्श्वे स्थितं कुर्यात्सौमित्रिं चानिलात्मजम्।

### ४.८.९९ रामबिम्बपीठमानम्

**खि. १९. ९९ - १०१**

ध्रुवबेरं त्रिधा कृत्वा एकभागं व्यपोह्य च।।

भागद्वयं त्रिधा कृत्वा समस्तं चोत्तमं भवेत्।
भागद्वयं मध्यमं स्यात् एकं भागमथाधमम्।।

एकैकं तु त्रिधा कृत्वा पीठं च त्रिविधं भवेत्।

### ४.८.१०० बलरामावतारस्वीकारे उद्देशः

**स. ६०. ४८ - ४९**

तृतीयं राममप्येवं यदुश्रेष्ठं महाबलम्।।

बलभद्रं विदुः सोऽपि दैत्यानां वधहेतुना।

भारावतरणार्थाय भुवो रामस्तथैव च।।

**ज्ञा. ८४. १६० , प्र. १५. ६२ - ६४ , क्रि. ११. ९९, १००**

**वा. २२.**

**४.८.१०१ बलरामध्रुवबेरप्रतिष्ठाया उद्देशः**

**ज्ञा. ३७. ६९**

सर्वाभौम (त्व ?) कामो बलभद्ररामं ------------

**४.८.१०२ बलरामालयनिर्माणे वास्तुविशेषाः**

**वा. २२.**

रामं यदुवरं चैव कृत्वा भक्तिपुरस्सरम्।

पश्चिमे चोत्तरे चैव दक्षिणे वा यथार्हके।।

ग्रामाग्रहारयोर्वापि नगर्यां पत्तनेऽपि वा।।

खर्वटे राजधान्यां च सेनासंवेशने तथा ।

**४.८.१०३ बलरामध्रुवबेरस्थापने विमानविशेषाः**

**ज्ञा. ३७. ६९**

स्वस्तिके चतुःष्फुटे वा बलभद्ररामम्।

**वा. २२.**

हस्तिपृष्ठे विमाने च सोमच्छन्दमथापि वा।

**स. ६०. ५१ ; ज्ञा. ८४. १६१ ; क्रि. ११. १००.**

**प्र. १५. ६५**

**४.८.१०४ बलरामध्रुवबेरस्थापने एकबेर - बहुबेरक्रमयोर्विकल्पः**

**वा. २२**

बहुबेरक्रमेणैव कृष्णस्यार्धासने तु वा।

एकबेरविधानं वा ------------।।

**स. ६०. ५२ , क्रि. ११. १०० , ज्ञा. ८४. १६१**

### ४.८.१०५ बलरामकृष्णयोर्ध्रुवबेरयोः प्रत्येकं द्वैविध्यम्

**ज्ञा. ८४. १६०**

तावपि सायुधौ निरायुधौ चेति द्विविधौ भवतः।

**क्रि. ११. १९**

### ४.८.१०६ सायुधस्य बलरामध्रुवबेरस्य लक्षणम्

**ज्ञा. ८४. १६१**

दशतालमानेन बलरामं शङ्खाभं नीलाम्बरधरं द्विभुजं दक्षिणेन मुसलधरं वामेन हलधरमेवं सर्वाभरणभूषितं बलभद्रं सायुधम्।

**क्रि. ११. १०१ , १०२**

**प्र. १५. ६५ - ६८**

------------ द्विभुजं श्वेतवर्णकम्।।

दशतालेन मानेन कृत्वा रूपं समाहितः।
दक्षिणेतरहस्ताभ्यां मुसलं खड्गमेव च।।

श्रोणीसूत्रसमेनैव मुष्टिं समुसलं दृढम्।
बाहुसूत्रसमं कुर्यात् हलं वामे तथैव च।।

तस्य दक्षिणपार्श्वे तु लक्ष्मीवद्रोहिणीं चरेत्।

**वा. २२.**

**वि. ५८. ३८०**

अथ बलरामं मध्यमं दशतालमितं द्विभुजं त्रिनतस्थितं दक्षिणहस्तेन मुसलधरं, वामेन हलधरं, श्वेताभं, रक्तवस्त्रधरम् उद्बद्धकुन्तलं ------ कारयेत्। दक्षिणे रेवतीं देवीं पद्मकिञ्जल्कवर्णां पुष्पाम्बरधरां दक्षिणेन हस्तेन पद्मधरां प्रसारितवामहस्तां कारयेत्।

**स. ६०. ५२ - ५४**

### ४.८.१०७ निरायुधबलरामध्रुवबेरस्य प्रतिष्ठाया उद्देशः

**ज्ञा. ८४. १६१**

निरायुधं बलभद्रं कामभोगशुभार्थी स्थापयेत्।

### ४.८.१०८ निरायुधबलरामध्रुवबेरस्य लक्षणम्

**क्रि. ११. १०२ - १०५**

------------ प्रवक्ष्यामि निरायुधम्।।

वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च।
सव्यं चाभयहस्तं तु वाममूरुनिवेशितम्।।

रेवतीं दक्षिणे पार्श्वे नीलोत्पलदलप्रभाम्।
पद्मं दक्षिणहस्तेन गहीत्वान्यं तथैव च।।

ऊरौ निवेश्य चासीनां रेवतीं च प्रकल्पयेत्।
सर्वाभरणसंयुक्तं देवं देवीसमन्वितम्।।

**स. ६०. ५४ - ५६ , प्र. १५. ६८ - ६९**

**वा. २२.**

[ अत्र मृगराजासनासीनम् इति विशेषः। ]

**ज्ञा. ८४. १६१**

तथा सिंहासने राघवरामवदासीनं बलभद्रं सीतावदासीनां रेवतीमञ्जनाभाम्, अथवा तत्सिंहासनस्यार्धे सह समासीनं कृष्णं वा कारयेत्।

### ४.८.१०९ कृष्णावतारस्वीकारे उद्देशः

**स. ६०. ५०**

कृष्णोऽपि वसुदेवस्य सुतो भूत्वावतीर्य च।
हत्वा नरककंसादीन् सर्वान् लोकान् अपालयत्।।

**४.८.११० कृष्णध्रुवबेरप्रतिष्ठाया उद्देशः**

**ज्ञा. ३७ . ६९**

भोगैश्वर्यसुखप्रीत्यै कृष्णम् ------।

**वा. १.**

**४.८.१११ कृष्णध्रुवबेरालयनिर्माणे वास्तुविशेषः**

**खि. १९. १३९ - १४३**

ग्राममध्ये च पूर्वे च दक्षिणे पश्चिमे तथा।।

कारयेदुत्तरे चैव विदिशास्वपि मन्दिरम्।
आरामे वा नदीतीरे पर्वते वा वनाश्रये।।

समुद्रवेलादेशे वा अन्यस्मिन् वा मनोरमे।
सरस्तटाकतीरे वा नदीसागरसङ्गमे ।।

नगरे पत्तने वापि खर्वटे कुटिके तथा।

**वा. २२.**

अतः परमिदं वक्ष्ये कृष्णस्य स्थापनाविधिम्।।

सर्वान् कामान् यदीच्छेत्तु ग्रामादीनां समर्चयेत्।
तन्मध्ये पश्चिमे कुर्यात् उत्तरे दक्षिणेऽथवा।।

नैर्ऋते वायुदेशे वा आरामे च वनाश्रमे ।
नदीतीरेऽब्धिपार्श्वे वा ग्रामाद् बाह्ये मनोरमे।।

सरित्तटाकतीरे वा कृष्णस्यापि च मन्दिरम्।

**४.८.११२ कृष्णध्रुवबेरस्य स्थापने विमानविशेषाः**

**खि. १९. १४३ - १४७**

भूमिं परीक्ष्य पूर्वं वै शुचौ देशे मनोरमे।।

कर्षणं विधिववत्कुर्याद्यावत्प्राकारविस्तरम्।
कृष्णस्य मन्दिरं कुर्यात्संस्कारयुतमुक्तवत्।।

कुम्भाकारं त्रिकूटं वा हस्तिपृष्ठमथापि वा।
नन्द्यावर्तं विमानं वा कृष्णस्योत्तममिष्यते।।

अथ वा मण्डपं वापि कूटं वा राजधानिकम्(?)।
कुर्यादेकतलं गेहमेकप्राकारसंयुतम्।।

पीठगोपुरसंयुक्तं यानशैषिकसंयुतम्।
एवं कृत्वा यथान्यायं --------।।

**वा. २२.**

सर्वतोभद्रकं चैव नन्द्यावर्तमथापि वा।।

स्वस्तिकं भद्रकं चैव पर्वताकृतिरेव वा।
कुम्भाकारे त्रिकूटाख्ये विमानेऽप्यन्यकेष्वपि ।।
यथावित्तानुसारेण कर्षणाद्यानि कारयेत्।

**ज्ञा. ८४. १६१**

सायुधं कृष्णम् ऐश्वर्यभोगार्थी गणिकाविहारे कुम्भाकारे गोपुराकारे विमाने वा स्थापयेत्।

**स. ६०. ६३**

[ अत्र कूटे वा इत्यधिकम्। ]

**क्रि. ११. १०८**

**ज्ञा. ३७ . ६९**

[ अत्र त्रिकूटमहाहंसान्विते इत्यधिकम्। ]

**प्र. १६. १, २**

[ अत्र पर्वताकृतिके इत्यधिकम्। ]

**४.८.११३ सपरिवारस्य द्विभुजकृष्णध्रुवबेरस्य लक्षणम्**

**खि. १९. १५० - १७१**

द्विभुजं त्रिणतं कुर्याद्देवं सुन्दरविग्रहम्।
सस्यश्यामनिभं प्रोक्तं कृष्णरूपं विशेषतः।।

रक्तवस्त्रधरं कुर्यात्कृष्णं भूषणभूषितम्।
उष्णीषं तु ततः कुर्यात्पार्श्वे पुरिम(?)संयुतम्।।

सहस्रकुन्तलैर्युक्तं शिरस्सम्यक् समाचरेत्।
दक्षिणे कर्णनालं तु रत्नकुण्डलसंयुतम्।।

पञ्चरत्नसमायुक्तमन्यत्र परनालिकम्(?)।
वामं च कर्णनालं च शङ्खपत्रेण योजयेत्।।

पद्मपत्रेक्षणं राजत्पीनोष्ठपुटसंयुतम्।
हारं श्रीच्छन्दमेवं स्यान्मुक्तामालामथोपरि।।

बाहुबन्धं ततः कुर्यात्किंपुरिं मुखमध्यमे।
अधस्तादुलिकां चैव योजयेद्वामदक्षिणे।।

प्रकोष्ठे च तथा कुर्यात्कटकत्रितयं बुधः।
हस्ताङ्गुलीयरत्नानि युक्तियुक्तं प्रयोजयेत्।।

उत्तरीयं तथा विद्वान् वनमालां च कारयेत्।
छन्नवीरसमायुक्तमुरोबन्धं च योजयेत्।।

कटिबन्धं तथा कुर्यात्सर्वरत्नसमन्वितम्।
नूपुरं त्रिमुखं कुर्यान्मुखरत्नसमन्वितम्।।

अथ दक्षिणहस्तं तु क्रीडायष्टिसमन्वितम्।
वामेन कोर्परेणाऽत्र गरुडं लम्बयेत्क्रमात्(?)।।

अहीनयौवनं चैव नातिबालं च कारयेत्।
क्रीडारससमायुक्तं दिव्यरूपं च कारयेत्।।

पादाङ्गुलिसमासक्तपादबन्धं च कारयेत्।
तस्य दक्षिणपार्श्वे तु रुक्मिणीं कारयेत्क्रमात्।।

पक्ववाकुल(वालुक?)वर्णां च शुकवर्णाम्बरां तथा।
सर्वाभरणसंयुक्तां नवतालेन कारयेत्।।

आदाय दक्षिणे हस्ते औत्पलं पुष्पमेव च।
प्रसार्य वामहस्तं तु किञ्चिद्देवं निरीक्ष्य च।।

सत्यभामां च वामे तु रक्तवस्त्रां स्वलङ्कृताम्।
श्यामवर्णां तथा कुर्यात्पुष्पमालाधरां करे।।

सर्वाभरणसंयुक्तां श्रीमन्मकुटबन्धनाम्।
वामपार्श्वे गरुत्मन्तं गोपालकमथापि वा।।

गरुडं पूर्ववत्कुर्यात् गोपालं गोपवेषकम्।
श्वेताम्बरधरं कुर्याद्रक्तवस्त्रधरं तथा।।

वंशहस्तं च गोपालं किञ्चिद्देवं निरीक्ष्य च।
भागाङ्गुलाधिकं कुर्यादष्टतालेन योजयेत्।।

श्रीदामानं तथा कुर्यान्नरमञ्जलिसंयुतम्।
कङ्कुश्यामनिभं कुर्याच्छ्वेताम्बरधरं तथा।।

षण्मात्राधिकमानेन अष्टतालेन योजयेत्।
निर्माल्यहारिणं चोक्तविधिना कारयेद् बुधः।।

सुन्दरं वाहनं कुर्याद् गरुडांशं तथैव च।

**वा. २२.**

कृष्णस्य ध्रुवबेरं तु देव्योश्च सहितं क्रमात्।।

उक्तध्रुवस्य मानेन कुर्यात् कृष्णं विधानतः।

----------------------------

----------------------------

लीलायष्टिधरं देवं वामेनासङ्गकूर्परम् ।
सर्वभूषणसंयुक्तं सूत्रब्रह्मसमन्वितम्।।

रक्ताम्बरधरं चैव श्यामलं कमलेक्षणम्।
मकुटे कुन्तलैर्युक्तं रुक्मवर्णसमायुतम्।।

रुक्मिणीं दक्षिणे कुर्यात् सत्यभामां तु वामतः।
वामे वामकरे धृत्वा उत्फुल्लं चारविन्दकम्।।

अन्यत् तद्विपरीतं वा सधृत्वोत्पलपद्मके।
रुक्मणीं रुक्मवर्णाभां श्यामाभां सत्यभामिनीम्।।
वसुदेवं देवकीं च पुरतो दक्षिणे कृते।।

यशोदां नन्दगोपं च देवेशं वीक्ष्य संस्थितान् ।
साम्बप्रद्युम्नकौ वामे कल्पयेद्देशिकोत्तमः।।

गोपमन्यत्तथा कुर्यात् दामं सुमनसं तथा।
कृष्णस्य कर्णनाभ्यन्तं समस्तं हनुमास्यकम् ।।

कक्षबाहुसमं वाथ कारयेद्युक्तितः क्रमात्।

नवतालेन मानेन सर्वभूषणभूषितम्।।

देवकीं वसुदेवं च रुक्मवर्णेन कारयेत्।
यशोदां गौरवर्णाभां कर्बुरं नन्दगोपकम्।।

प्रद्युम्नं श्यामवर्णं च साम्बं कालाम्बुदप्रभम्।
दामं रक्तनिभं कुर्यात् गौरं सुमनसं तथा।।

पूर्वोक्तेनैव कृत्वा तु मानोन्मानप्रमाणतः।

**४.८.११४ चतुर्भुजकृष्णध्रुवबेरस्य लक्षणम्**

**क्रि. ११. १२३ , १२५**

कृष्णं चतुर्भुजं केचिदिच्छन्ति मुनिसत्तमाः।।

पूर्ववत् पूर्वहस्तौ तु शङ्खचक्रधरौ परौ।
कृष्णादिमूर्तयः प्रोक्ता वासुदेवपुरस्सराः।।

सर्वमन्यत्समं प्रोक्तमिति पूर्वजशासनम्।

**४.८.११५ निरायुधस्य कृष्णध्रुवबेरस्य लक्षणम्**

**ज्ञा. ८४. १६१**

तथा सिंहासने राघवरामवदासीनं कृष्णं दक्षिणे सीतावदासीनां रुक्मिणीं वामे दक्षिणपादमाकुञ्च्य वामं प्रसार्य तथासीनां सत्यभामां च कारयेत्। (एवं निरायुधं कृष्णं महाभोगसुखप्रीतिकामः स्थापयेत्।) यद्यद्रूपेण देवो यद्यत्कर्म कृतवान् तत्तद्रूपं यथाभक्ति कारयेत्।

**स. ६०. ६९ ; क्रि. ११. ११३**

**४.८.११६ कृष्णध्रुवबेरस्य मानम्**

**प्र. १६. २१ - ४०**

पीठं च प्रतिमोत्सेधं पञ्चभागं त्रिभागिकम्।।

नवांशात्सप्तभागं च त्रिभागद्वयमुच्यते।
लौकिकप्रतिमोत्सेधं मानाङ्गुलमिति क्रमात्।।

प्रथमं तु नवाङ्गुल्यं द्विद्यङ्गुलविवर्धनम्।
नवसङ्ख्यमिति प्रोक्तं मानमेवं विधीयते।।

एतेन तु त्रिभेदं स्यात् उत्तमाधममध्यमम्।
मानं प्रमाणमुन्मानं लम्बमानोपमानकम्।।

पञ्चतालमिति प्रोक्तं लम्बमानं विधीयते।
सात्त्विकं राजसं चैव तामसं तु विवर्जयेत्।।

दक्षिणं मानमुद्धृत्य नाभिसूत्रप्रमाणकम्।
कटियोनिसमं वाथ दक्षिणं पादमेव हि।।

दण्डहस्तं तु मानेन मूर्ध्नि केशाक्षमेव वा।
अभयं दक्षिणं हस्तं भ्रूमात्रं कूर्परादयः।।

दक्षिणेन मुखं चैव किञ्चित्प्रहसिताननम्।
केशकम्बलमित्युक्तं सूत्रं वामाश्रयं भवेत्।
उष्णीषस्थपदे मध्ये नासाग्रे पुटवामके।
नाभिमध्यगतौ वापि मुष्कमालोरुदक्षिणे।।

पादे दक्षिणपाण्यन्ते अग्रान्मकुटवामके।
लम्बयेन्मध्यसूत्रं चेत् अन्यत् सूत्रं न कारयेत्।।

उष्णीषमङ्गुलार्धं च मुखमष्टाङ्गुलं भवेत्।
गलमर्धाङ्गुलं तस्य ग्रीवान्तं द्व्यङ्गुलं भवेत्।।

हिक्कान्तं हृदयान्तं च नाभ्यन्तं मेढ्रमूलकम्।

अष्टादशाङ्गुलं चैवमूर्ध्वकायं विधीयते।
त्रयोदशाङ्गुलं चैवमूरुदीर्घं विधीयते।।

जानुस्स्यात् द्व्यङ्गुलं चैव जङ्घा चोरुश्च तत्समा।
चरणं द्व्यङ्गुलं चैव मानमेव न संशयः।
हिक्कासूत्रान्ततो बाहुः दशाङ्गुलमिति स्मृतम्।।

प्रकोष्ठमष्टाङ्गुलायामं सप्ताङ्गुलतलायतम्।
मुखं मुखविशालं स्यात् कर्णविस्तारमङ्गुलम्।।

ग्रीवाविस्तारमेवं स्यात् चतुरङ्गुलचतुर्यवम्।
अभयं बाहुमानं च चतुर्विंशतिरङ्गुलम्।।

कक्षयोरन्तरं चैव चतुर्दशाङ्गुलविस्तरम्।
ऊरुर्दशाङ्गुलं चैव श्रोणिरेकादशाङ्गुलम्।।

कटिविस्तारमेवं स्यात् त्रयोदशाङ्गुलमिष्यते।
ऊरुमूलसुविस्तारमष्टाङ्गुलमिति क्रमात्।।

षडङ्गुलं जानुतारं जङ्घातारं च सप्तकम्।
त्र्यङ्गुलार्धं च विज्ञेयं नालिकाविस्तरं भवेत्।।

पादविस्तारमेवोक्तं सर्वलक्षणसंयुतम्।

## ४.८.११७ कृष्णावताररूपविशेषाः

**वा. २१.**

वामपार्श्वे तथा कृष्णं देवीभ्यां च समन्वितम्।
नवनीतनटं चैव तथा कालियमर्दनम्।।

पार्थसारथिरूपं च विश्वरूपमथापि वा।

वेणुं चाधरयोगं च हस्ताभ्यां क्रीडयन् क्रमात्।।

सुस्थितं वामपादं च दक्षिणेनैव बन्धयेत्।
अथवा चतुर्भुजं कृष्णं वेणुं चाधरयोजितम्।।

धारयेच्चक्रशङ्खाभ्यां भुजे चोर्ध्वे यथाक्रमम्।
नवनीतादिकृष्णस्य देवीभ्यां सहितं क्रमात्।।

अथवा रहितं तत्र कारयेदिति केचन।
अन्यानि कृष्णरूपाणि यजमानेच्छया पुनः।।

कृष्णरूपमसङ्ख्यातं संख्या वक्तुं न शक्यते ।
देवानां च ऋषीणां च वक्तुं नैवावतारकम्।।

**स. ६०. ७० ; क्रि. ११. ११४ - ११६**

**प्र. १६. २०, २१**

**स. ६०. ८१, ८२**

कृष्णरूपमसङ्ख्यातं सङ्ख्या वक्तुं न शक्यते।।

स्वेच्छारूपं तु कृत्वा तु तद्रूपं तु समर्चयेत्।

**ज्ञा. ८४. १६१ , खि. १९. १९६ - १९८ , वि. ५९ . ३८१**

**४.८.११८ वयोऽनुसारेण कृष्णध्रुवबेरमानम्**

**प्र. १६. २ - ६**

कृष्णस्य बालरूपस्य वयसा तालमानकम्।।

एकवर्षं समारभ्य यावत्पञ्चाब्दमादरात्।
तालत्रयक्रमेणैव यथायोगं प्रकल्पयेत्।।

वेदवर्षं समारभ्य षट्तालत्रयमेव वा।
सप्तवर्षं समारभ्य सप्ततालत्रयं तथा।।

दशवर्षं समारभ्य अष्टतालत्रयं तथा।
त्रयोदश समारभ्य नवतालत्रयं तथा।।

एवं वयः क्रमेणैव तालमानं तथोच्यते।

## ४.८.११९ कृष्णध्रुवबेरस्य बालगोपालस्य लक्षणम्

**प्र. १६. ८३ - ८५**

वामजानुं समाकुञ्च्य दीर्घमन्यं प्रसार्य च।
तथैवाविथ्य सन्न्यस्य भूम्यां वामकरं पुरः।।

आकुञ्चितान्यपादेन चासनस्थितिशोभिना।
अन्यहस्तेन सन्धार्य नवनीतं नवं नवम्।।

मुहुरालोकयन्तं तद्दर्शनीयं विशेषतः।
एवं कृष्णं प्रकुर्वीत बालगोपालविग्रहम्।।

## ४.८.१२० लीलामानुषविग्रहकृष्णध्रुवबेरस्य लक्षणम्

**प्र. १६ . ६१ - ६९**

सर्वभूषणसंयुक्तं ब्रह्मसूत्रसमन्वितम्।
रक्ताम्बरधरं चैव श्यामलं कमलेक्षणम्।।

रुक्मिणीसत्यभामाभ्यां पार्श्वयोरुपशोभितम्।
रुक्मिणीं रुक्मवर्णाभां सत्यां श्यामनिभां तथा।।

वसुदेवं देवकीं च पुरतो दक्षिणे तथा।
यशोदां नन्दगोपं च देवेशं वीक्ष्य सुस्थितम्।।

प्रद्युम्नं च तथा साम्बं वामे कुर्यात्सलक्षणम्।
दामं सुमनसं चैव कुर्यादन्यां च गोपिकाम्।।

कर्णाग्रान्तं तु कृष्णस्य सुमन्तं वाममाश्रितम्।
कक्षबाहुसमं वापि कारयेद्युक्तितः क्रमात्।।

नवतालेन मानेन कुर्यात्तान् समलङ्कृतान्।
देवकीं वसुदेवं च कृष्णवर्णौ प्रकल्पयेत्।।

यशोदां गौरवर्णां च कर्बुरं नन्दमाचरेत्।
प्रद्युम्नं श्यामवर्णं च साम्बं कालाञ्जनप्रभम्।।

दामं रक्तनिभं चैव गौरं सुमनसं तथा।
सुमन्तं श्वेतवर्णं च कल्पयेद्विधिना बुधः।।

एवं कृष्णं प्रकुर्वीत लीलामानुषविग्रहम्।
चतुर्मूर्तिक्रमश्चैषां वासाधिकरणोक्तवत्।।

### ४.८.१२१ सपरिवारकालियमर्दनकृष्णध्रुवबेरस्य लक्षणम्
### खि. १९. १९० - १९३

कालीयस्य फणाग्रे तु सङ्घटनपरं चरेत्।
कुर्याद्बालं प्रनृत्यन्तं विस्मयोत्फुल्ललोचनम्।।

पताकाहस्तमेकं तु धृताहिं चैव वामकम्।
प्रभामण्डलसम्बद्धपादपद्मविभूषितम्।।

तत्पार्श्वे नागपत्न्यश्च सर्वाभरणभूषिताः।
कृताञ्जलिपुटाः कार्या देवमानम्य चादरात्।।

एवं कष्णं प्रकुर्वीत कालीयशिरसि स्थितम्।
अनन्तलीलाललितकृष्णरूपाणि कारयेत्।।

**स. ६०. ७४ - ७६**

[ अत्र फणानां पञ्चसंयुक्तम् इत्यधिकम्। ]

### ४.८.१२२ क्रीडायष्टिधरकृष्णध्रुवबेरस्य लक्षणम्

**प्र. १६. ८ - २०**

वासुदेवं गुडाकेशं सर्वाभरणभूषितम्।
क्रीडायष्टिधरं देवं त्रिभङ्गध्यानसंयुतम्।।

स्वस्तिकं दक्षिणं पादं वामपादं तु कुञ्चितम्।
तिष्ठन्तमङ्गुलिस्थाने चाङ्गुष्ठस्थितिमाचरेत्।।

किञ्चित्कुञ्चितजान्वन्तवामपादस्थितिर्भवेत्।
वक्त्रं चैव तथा गात्रं कटिभागं तथैव च।।

त्रिषु मार्गेषु भङ्गित्वात् त्रिभङ्गित्वं विधीयते।
वक्त्रं दक्षिणतो भागे मध्यभागं तु वामतः।।

कटिर्दक्षिणतो भागे भङ्गत्रयमुदाहृतम्।
दक्षिणं कटिकं हस्तं क्रीडायष्टिसमन्वितम्।।

दक्षिणे यष्टिहस्तं तु नाभिसूत्रादथोन्नतम्।
भूतवेदगुणाङ्गुल्या विधिना सहितालतः (?)।।

वामं देव्योर्भुजासक्तं वामहस्तमधोमुखम्।
हिक्कासूत्रादधो वामं कूर्परं स्याद्दशाङ्गुलम्।।

षट्सप्ताष्टाङ्गुलाधिक्योन्नतं वा कारयेत् क्रमात्।
वामहस्ततलाग्रं तु नाभिमात्रं तु योजयेत्।।

वेणुं च तरवेगं तु हस्ताभ्यां पीडयेत्क्रमात्।

ऊर्ध्वकायसमं वेणुं क्रीडायष्टिं तु तत्समम्।।

त्रिणतं श्यामलाङ्गं च द्विभुजं रक्तवाससम्।
चतुर्भुजं वा कुर्वीत शङ्खचक्रधरं परम्।।

सुस्थितं वामपादेन दक्षिणेनैव बन्धयेत्।
सर्वाभरणसंयुक्तं सुन्दरं सौम्यलोचनम्।।

देवीभ्यां सहितं कुर्यात् रहितं वात्र केचन।
देवस्य वामे गरुडं प्राञ्जलीकृत्य सुस्थितम्।।

पक्षद्वययुतं कुर्यात् तालपत्रस्य मूलवत्।

**स. ६०. ६३ - ६८**

नवतालेन मानेन कृष्णं सम्यक् समाचरेत्।।

श्रीधरं (त्रिणतं ?)श्यामलाङ्गं च द्विभुजं रक्तवाससम्।
क्रीडायष्टिधरं कुर्याद्दक्षिणैनैव पाणिना।।

वाममुत्क्रीडनं कृत्वा लीलयैव च सुस्थितम्।
सर्वाभरणसंयुक्तं सुन्दरं सौम्यलोचनम्।।

रुक्मिणीं दक्षिणे देवीं सत्यभामां च वामतः।
रक्तपीतनिभे देव्यौ कृष्णं पीताम्बरावृतम्।।

सर्वाभरणसंयुक्तं बाहुमानेन कारयेत्।
दक्षिणे रुक्मिणीं वाथ भूमिं कुर्याच्च वामके।।

वामपार्श्वे स्थितं कुर्याद् गरुडं प्राञ्जलीकृतम्।

**ज्ञा.८४. १६१**

[ अत्र पीतवाससं कृष्णम्। रुक्मिणीं कृष्णाभाम् इति दक्षिणेन हस्तेन

पद्मधरां प्रसारितवामहस्तां च कारयेदिति च विशेषः। ]

**क्रि. ११. १०९ - १११**

## ४.८.१२३ सपरिवारक्रीडायष्टिधरकृष्णध्रुवबेरस्य मानम्

**वि. ५९. ३८० , ३८१**

मध्यमं दशतालमितं द्विभुजं श्यामाभं रक्तवस्त्रधरं सर्वाभरणभूषितं उद्बन्धकुन्तलं दक्षिणेन हस्तेन क्रीडायष्टिधरम् उद्धृतवामकूर्परं हिक्कासूत्रादधो दशाङ्गुलं दक्षिणकरकटकाग्रं नाभिदघ्नं वा तस्मात् षट् सप्ताष्टदशाङ्गुलं निम्नं, नासाग्रात् पादतलान्तं हिक्कासूत्राद्वामेङ्गुलं सूत्रात्तस्यार्धं हृदयं नाभेर्दक्षिणे कलाङ्गुलं मेढ्रभागं वामे जान्वन्तं जगतीयवं सूत्रान्मात्रत्रयं पार्ष्ण्यन्तरम् एवं समभङ्गसूत्रमन्यत्सर्वं राघवस्योक्तवत्।-------------- देवस्य दक्षिणहस्तं लीलायष्टियुतं वामं सशङ्खं वा कारयेत्। -------------- दक्षिणे रुक्मिणीदेवीं हेमाभां धम्मिल्लकुन्तलयुतां वा, प्रसारितदक्षिणहस्तां, सपद्मवामहस्तां वामपार्श्वे सत्यभामां श्यामाभां धम्मिल्लकुन्तलयुतां सोत्पलदक्षिणहस्तां प्रसारितवामकरां सर्वाभरणसंयुक्तां कारयेत्। वामपार्श्वे गरुडं प्राञ्जलीकृत्य स्थितं कारयेत्।

**वा. २२.**

## ४.८.१२४ नवनीतनटकृष्णध्रुवबेरस्य लक्षणम्

**स. ६०. ७१ - ७४**

नृत्यन्तं बालरूपं च सर्वाभरणभूषितम्।
तथाम्बराञ्चलेनैव ग्रन्थियुक्तेन संयुतम्।।

कुञ्चितं दक्षिणं पादं किञ्चिदुद्धृत्य वै पुनः।
किञ्चित्कुञ्चितवामेन स्थित्वा नृत्यन्तमेव तम्।।

अभयं दक्षिणं हस्तं नवनीतयुतं तु वा।

वामं प्रसार्य चोत्तानं नवनीतनटं तु वा।।

गोपीं च वामतः कुर्यान्मथ्नन्तीं च महादधि।

**ज्ञा. ८४. १६१ ; खि. १९. १९४ , १९५**

**वि. ५९ . ३८१**

[अत्र अम्बरहीनम् अम्बराधारयुतं नवनीतनृत्तरूपम् इत्यधिकम् इति विशेषः ]

**प्र. १६. ४२ - ४५**

आलोलकुन्तलोद्भासिमुखचन्द्रविराजितम्।।

अतिरक्ताधरोष्ठं च रक्तपाणिद्वयाञ्चितम्।

वामपादं समाकुञ्च्य चोत्तानीकृत्य दक्षिणम्।।

दक्षिणं चाभयं हस्तं नवनीतयुतं तथा।

वामं प्रसार्य चोत्तानं सर्वाभरणभूषितम्।।

साम्बरं तु प्रकुर्वीत विगताम्बरमेव वा।

एवं तु विधिना कुर्यान्नवनीतनटं बुधः।।

## ४.८.१२५ कालियमर्दनकृष्णध्रुवबेरस्य लक्षणम्

**ज्ञा. ८४. १६१**

सप्तभिः पञ्चभिर्वा फणैर्युक्तस्य कालीयनागस्य फणोपरि पूर्ववत्[1] नृत्यन्तं प्रसारितवामहस्तेन गृहीतकालीयनागपुच्छमेवं कालीयमर्दनं कारयेत्।

**प्र. १६. ४६, ४७**

[ अत्र दक्षिणे करे नवनीतस्य खण्डकम् इत्यधिकम्। ]

**वि. ५९. ३८१**

[ दक्षिणं करं सपताकम् इत्यधिकम्। ]

**४.८.१२६ कृष्णध्रुवबेरस्य सन्तानगोपालस्य लक्षणम्**

**प्र. १६. ४८ - ५०**

नीलोत्पलदलश्यामं पीताम्बरसुशोभितम्।
चतुर्भुजं शङ्खचक्रमूर्ध्वपाणिद्वये धृतम्।।

अधः पाणिद्वये वेणुं वादयन्तं मुदान्वितम्।
सर्वालङ्कारसंयुक्तं गरुडोपरि संस्थितम्।।

देवीभ्यां सहितं देवं मुनिभिः परिवेष्टितम्।
कृष्णमेवं प्रकुर्वीत सन्तानार्थी विशेषतः।।

**४.८.१२७ कृष्णध्रुवबेरस्य बृन्दावनचरस्य लक्षणम्**

**प्र. १६. ४० - ४२**

कलापकुसुमश्यामं शङ्खचक्रगदाम्बुजम्।।

अनेकरत्नं सञ्छन्नं कौस्तुभोद्भासिवक्षसम्।
तारहारावलीरम्यं गरुडोपरि संस्थितम्।।

देवीभ्यां सहितं कुर्यात् कृष्णं वृन्दावने रतम्।

**४.८.१२८ कृष्णध्रुवबेरस्य जगन्मोहनस्य लक्षणम्**

**प्र. १६. ५१ - ५७**

कलापकुसुमश्यामं पूर्णचन्द्रनिभाननम्।
बर्हिबर्हकृतोत्तंसं सर्वालङ्कारसंयुतम्।।

युवतीवेषलावण्यं (?)श्रीवत्साङ्कितवक्षसम्।
स्मेरारुणाऽधरन्यस्तवेणुं त्रैलोक्यमोहनम्।।

अक्षमालां च विद्यां च कुर्यादूर्ध्वकरद्वये।
वेणुं करद्वये कुर्यात् चतुर्भुजयुतं हरिम्।।

तपनीयलसत्कान्त्या भ्राजत्कमलहस्तया।
निरीक्ष्यमाणचरणं वामपार्श्वस्थया श्रिया।।

हेमसिंहासने रम्ये राज्ञीभिस्तु निषेवितम्।
चन्द्रमण्डलसङ्काशश्वेतच्छत्रेण शोभितम्।।

नारदाद्यैर्मुनिगणैः ज्ञानार्थिभिरुपासितम्।
इन्द्रादिदेवतावृन्दैः प्रणतं परमेश्वरम्।।

एवं कृष्णं प्रकुर्वीत जगन्मोहनविग्रहम्।

**४.८.१२९ कृष्णध्रुवबेरस्य वेणुनादनटस्य लक्षणम्**
**प्र. १६. ५७ - ६०**

गोपीभिरावृतं गोभिः परमानन्दविग्रहम्।।

व्यत्यस्य दक्षिणं पादं वामे न्यस्य च सुस्थितम्।
चतुर्भुजं शङ्खचक्रधरमूर्ध्वकरद्वये।।

धृत्वा वेदमयं वेणुमन्यहस्तद्वयेन च।
अङ्गुलीभिर्मुदा वेणुसुषिराणि च पूरयन्।।

दिव्यगान्धर्वगीतार्थं त्रिभङ्गेन च संस्थितम्।
एवं कृष्णं प्रकुर्वीत वेणुनादनटं बुधः।।

**४.८.१३० कृष्णध्रुवबेरस्य राजगोपालस्य लक्षणम्**
**प्र. १६. ७०, ७१**

धृत्वा पुष्पमयीं यष्टिं दक्षिणेन तु पाणिना।
न्यस्यान्यं चैव भूमिस्थराजदण्डस्य मूर्धनि।।

राजार्हाभरणैर्युक्तं रुक्मिण्या सहितं प्रभुम्।
एवं कृष्णं प्रकुर्वीत राजगोपालविग्रहम्।।

### ४.८.१३१ कृष्णध्रुवबेरस्य ज्ञानगोपालस्य लक्षणम्

**प्र. १६. ७२, ७३**

पीताम्बरधरं देवं ज्ञानमुद्रालसत्करम्।
वेणुमन्यकरे धृत्वा सुखासीनं शुचिस्मितम्।।

उपास्यमानं मुनिभिः देवीभ्यां रहितं हरिम्।
कृष्णमेवं प्रकुर्वीत ज्ञानगोपालविग्रहम्।।

### ४.८.१३२ कृष्णध्रुवबेरस्य मोहनगोपालस्य लक्षणम्

**प्र. १६. ७४ - ७६**

स्वर्णप्रभमुदाराङ्गमष्टबाहुं जगत्प्रभुम्।
इक्षुचापाङ्कुशान् वेणुं शङ्खारिसुमसायकान्।।

बिभ्रन्तं रमयाश्लिष्टदिव्यमङ्गलविग्रहम्।
सर्वाभरणसंयुक्तं योगिनाममृतप्रदम्।।

एवं सम्मोहनं कुर्यात्कृष्णं गोपालविग्रहम्।

### ४.८.१३३ कृष्णध्रुवबेरस्य गोवर्धनधरस्य लक्षणम्

**प्र. १६. ७६ - ७९**

गवां गोपकुमाराणां गोपीनां रक्षणाय वै।।

नगं गोवर्धनं नाम दधार भगवान् हरिः।
वामेनोद्धृतहस्तेन बिभ्रन्तं नगमुत्तमम्।।

कटिन्यस्तान्यहस्तं च पद्महस्तमथापि वा।
शङ्खचक्रधरं देवं कुर्याच्चैव चतुर्भुजम्।।

एवं कृष्णं प्रकुर्वीत गोवर्धनधरं हरिम्।

### ४.८.१३४ कृष्णध्रुवबेरस्य पार्थसारथेः लक्षणम्

**प्र. १६. ७९ - ८२**

पुरा महति सङ्ग्रामे पार्थं रक्षितवान् हरिः।।

पार्थं रथस्थितं कुर्यात् शरतूणीरसंयुतम्।
समीक्षमाणं देवेशं स्यन्दनस्थं स्वपार्श्वगम्।।

श्यामवर्णं महाबाहुं कृष्णमुद्बद्धकुन्तलम्।
बिभ्रन्तं दक्षिणे पाशं शङ्खं वामकरे तथा।।

अर्जुनस्य मुखं वीक्ष्य स्मयमानं महारथम्।
एवं कृष्णं प्रकुर्वीत पार्थसारथिविग्रहम्।।

**स. ६०. ७७ - ८०**

[ अत्र केतुवानरभूषितम् इत्यधिकम्। ]

### ४.८.१३५ कृष्णध्रुवबेरस्य वटपत्रशयनस्य लक्षणम्

**प्र. १६. ८६ - ९०**

पुरा संवर्तसमये संहृतेषु जगत्सु च।
वटपत्रे विनिद्राणो बभूव भगवान् हरिः।।

वटपत्रे शयानं तु बालरूपं परात्परम्।
आकृष्य दक्षिणं पादं वामहस्तेन लीलया।।

पादाङ्गुष्ठं मुखे न्यस्य धास्यन्तं हसिताननम्।
दक्षिणेन तु हस्तेन वहन्तं दक्षिणोरुकम्।।

प्रसारितेतरपदं दिव्यालङ्कारशोभितम्।
वटपत्रं प्रकुर्वीत विशालं चाधराग्रकम्।।

वटपत्रशयानं तु कृष्णमेवं प्रकल्पयेत्।

### ४.८.१३६ कृष्णध्रुवबेरस्य सर्वमोहनस्य लक्षणम्

**प्र. १६. ९० - ९२**

शङ्खचक्रगदापद्मपाशाङ्कुशलसत्करम्।।

कराभ्यां वेणुमादाय धमन्तं सर्वमोहनम्।
सूर्यायुतशताभासं पीताम्बरसुशोभितम्।।

नानालङ्कारसुभगं सूर्यमण्डलसंस्थितम्।
एवं प्रकल्पयेत् कृष्णं महान्तं सर्वमोहनम्।।

### ४.८.१३७ कृष्णध्रुवबेरस्य बालरूपस्य लक्षणम्

**प्र. १६. ६ , ७**

तिष्ठन्तमेकपीठस्थं रुक्मिण्या सत्यभामया।।

कृष्णं च बालवपुषं श्यामलं पीतवाससम्।
रुक्मिणीं कनकाभां च सत्यभामां च श्यामलाम्।।

### ४.८.१३८ कृष्णध्रुवबेरस्य वेणुगोपालस्य लक्षणम्

**क्रि. ११. ११६ - ११८**

दक्षिणं कुञ्चितं पादं वामपादं तु सुस्थितम्।।

तस्य कुञ्चितपादं तु वामपार्ष्णिनिवेशितम्।
गृहीतवेणुं हस्ताभ्यां वेणुरन्ध्राहिताननम्।।

बर्हिबर्हावतंसं च कुर्याद् गोपालविग्रहम्।
युक्त्या बुद्ध्या समूह्यैव कुर्यात्तद्रूपकल्पनम्।।

**वा. १.**

लीलायष्टिधरं कृष्णं वेणुना सहितं विभुम् ।
रुक्मिणीसत्यभामाभ्यां तार्क्ष्ययुक्तं यथाक्रमम्।

### ४.८.१३९ कृष्णध्रुवबेरस्य सुन्दरगोपालस्य लक्षणम्

**क्रि. ११. ११९ - १२१**

क्रीडायष्टिधरं कृष्णं तथा गोपालविग्रहम्।
विनान्यान्यस्य रूपाणि देवीविरहितानि वै।।

क्रीडायष्टिधरं कृष्णं चौत्सवं विष्णुमेव वा।
(ज्ञात्वा च हरिवत् सर्वान् परिवारान् प्रकल्पयेत्।।

सुन्दरं नाम गोपालं विधिवत् स्थानमाश्रितम्।
द्विभुजं पुष्पवहं चैव कुर्यान्निर्माल्यहारिणम्।।)

### ४.८.१४० मानुषदैविकभेदेन द्विविधो वासुदेवः

**ज्ञा. ८६. १६३**

अथ वसुदेवादुद्भूतो वासुदेवः । सः मनुष्यरूपधारणात् मानुषवासुदेवः, देवरूपधारणात् दैविकवासुदेवश्चेति द्विविधो भवति।

**स. ६१. १ ; वि. ६०. ३८४ , ३८५**

### ४.८.१४१ मानुषवासुदेवध्रुवबेरस्थापने विमानविशेषाः

**ज्ञा. ८६. १६३**

एवं मानुषवासुदेवं दीर्घशालायां गोपुराकारे वा विमाने श्रीकीर्ति-शौर्यवीर्यादिकामः प्रतिष्ठाप्यार्चयेत्।

**वि. ६०. ३८४**

[ आयताश्रे विमाने इति विशेषः। ]

### ४.८.१४२ मानुषवासुदेवध्रुवबेरलक्षणम्

**खि. १९. २०३ - २१३**

अत ऊर्ध्वं मानुषस्य वासुदेवस्य वै विधिम्।

प्रवक्ष्यामि समासेन शृणुध्वमृषिसत्तमाः।।

मनुष्यवपुषं देवं द्विभुजं शङ्खचक्रिणम्।
श्यामाङ्गं च तं कुर्यात्सर्वाभरणसंयुतम्।।

दक्षिणे रुक्मिणीं देवीं स्वर्णाभां च किरीटिनीम्।
रक्ताम्बरधरां चैव सर्वाभरणभूषिताम्।

सव्ये पद्मधरां हस्ते प्रसार्येतरमास्थिताम्।
दक्षिणे बलभद्रं तु बलिनं मुसलायुधम्।।

सर्वाभरणसंयुक्तं श्वेतं नीलाम्बरान्वितम्।
तस्य दक्षिणपार्श्वे तु प्रद्युम्नं रक्तवर्णकम्।।

पीतकौशेयवसनं किरीटाद्यैश्च भूषितम्।
एकं दीर्घक्षुरकरं वामं कट्यवलम्बितम्।।

अनिरुद्धं वामपार्श्वे प्रवालाग्निसमप्रभम्।
पुष्पाम्बरधरं कुर्यात् खड्गखेटकधारिणम्।।

पार्श्वे साम्बं तथा कुर्यात् नीलाम्बुदसमप्रभम्।
श्वेताम्बरं तथा कुर्याद्दण्डादानकरं पुनः।।

ब्रह्माणं दक्षिणे कुर्याच्चतुर्भुजसमन्वितम्।
पूर्वोक्तेन प्रकारेण दशतालप्रमाणतः।।

गरुडं चोत्तरे कुर्यात्पूर्वोक्तनवतालतः।
तद्रूपं कौतुकं कुर्यादाश्रित्य नवधा विधिम्।।

मध्ये तु वासुदेवं तु कारयेद्वा चतुर्भुजम्।
एवं मानुषरूपं तु गोपुरे दीर्घशालके।
स्थापयित्वाऽर्चयेद्देवं सर्वकामार्थसिद्धये।।

**स. ६१. २ - ११ ; ज्ञा. ८६. १६३**

**वि. ६०. ३६४**

[ अत्र मध्यमदशतालम् इति विशेषः। ]

**४.८.१४३ दैविकवासुदेवध्रुवबेरस्थापने विमानविशेषाः**

**ज्ञा. ८६. १६३**

दैविकवासुदेवं स्वदारपुत्रपौत्रभ्रातृपूर्वस्वकुलवर्धनायुरारोग्यैश्वर्यसुख-भोगश्रीकीर्त्यादिकामः सोमच्छन्दे बृहद्वृत्ते वा विमाने प्रतिष्ठाप्यार्चयेत्।

**स. ६१. १२ ; खि. १९. २१४**

**४.८.१४४ सपरिवारस्य दैविकवासुदेवध्रुवबेरस्य लक्षणम्**

**स. ६१. १२ - २१**

दैविकं वासुदेवं च प्रवक्ष्यामि यथाक्रमम्।

---------------------------

चतर्भुजधरं देवं शङ्खचक्रधरं परम्।
अभयं दक्षिणे हस्ते वामं कट्यवलम्बितम्।।

किरीटादि विभूषाढ्यं भूषणैरपि भूषितम्।
रक्ताम्बरधरं देवं दशतालेन मानतः।।

श्रीभूम्यौ पार्श्वयोर्देव्यौ पूर्ववत् कारयेद् बुधः।
पूर्वोक्तान् बलभद्रादीन् सायुधान् वा निरायुधान्।।

तत्तद्देव्या समायुक्तान् विना वा सम्यगाचरेत्।
रेवतीं दक्षिणे कुर्यात् बलभद्रस्य पार्श्वतः।।

रोहिणीं नीलवर्णां च प्रद्युम्नस्यैव पार्श्वतः।
अनिरुद्धस्य पार्श्वे तु रामां श्यामां तथैव च।।

तस्य साम्बस्य पार्श्वे तु पीतामिन्दुकरीमपि।
गृहीत्वा पुष्पमेकेन हस्तमन्यं प्रसार्य च।।

किरीटाभरणैर्युक्ता देवीस्सर्वाश्च कारयेत्।
रुक्मिणीं नीलवर्णां च प्रद्युम्नं चैव पार्श्वतः।।
अनिरुद्धञ्चैव पार्श्वे रामञ्चापि तथैव च।
तस्य रामस्य पार्श्वे तु देवान् सर्वांश्च कारयेत्।।

एवं दैविकमार्गं तु ----------------।

**ज्ञा. ८६ . १६३**

[ अत्र रेवतीं रक्ताभाम् इति विशेषः ]

**खि.१९.२१४ - २२० ; वि.६०.३८५**

**४.८.१४५ कल्क्यवतारस्वीकारे उद्देशः**

**स.६०.९६ - ९७**

युगान्तसमये विष्णुः कल्की चैव भविष्यति।।

खड्गखेटकहस्तस्तु म्लेच्छादीन् स हनिष्यति।
संहारात्मा च सर्वांश्च दुर्विनीतान् मदोद्धतान्।।

**ज्ञा ८५. १६२ ; क्रि. ११, १२५ - १२७ ; प्र.१६.१०२**

**४.८.१४६ कल्किध्रुवबेरप्रतिष्ठाया उद्देशः**

**ज्ञा.३७.६९**

पापौघविघ्नाय कर्किणं पूजयेदिति विज्ञायते।

**४.८.१४७ कल्किध्रुवबेरस्थापने विमानविशेषाः**

**प्र.१६.१०३**

कूटे वा गोपुरे वापि पर्वताकृतिकेऽपि वा।

कल्किरूपं प्रतिष्ठाप्य विमाने तु समर्चयेत्।।

**ज्ञा.३७.६९, ८५. १६२**

मायूरके कूर्मे चत्वरे वा कल्किनं स्थापयेत्। -------- भूताकारे वा विमाने प्रतिष्ठाप्यार्चयेत्।

**४.८.१४८ कल्किध्रुवबेरस्य लक्षणम्**

**प्र.१६.१०४ - १०६**

मध्यमं दशतालेन भिन्नाञ्जनचयप्रभम्।
अश्वाननं मुखं कुर्यात् अन्यच्चैव नराकृति।।

चतुर्भुजं च हस्तेषु क्रमाच्चैवायुधान्यपि।
चक्रं शङ्खं च खड्गं च दधानं खेटकं तथा ।।

अथ वा कल्पयेद्देवमश्वारूढं द्विबाहुकम्।
शुद्धस्फटिकसङ्काशं खड्गखेटकधारिणम्।।

**वि.५९.३८२**

**क्रि.११. १२६**

रक्तवाससम् इति विशेषः।

**४.८.१४९ मत्स्यादिबेराणां एकगर्भगृहे स्थापनप्रकारः**

**क्रि. ३०. १ - ६**

दशानामवताराणां स्थापनं वक्ष्यते ततः।
पूर्वमेव मया प्रोक्तं पृथगालयकल्पनम्।।

एकगर्भगृहे स्युश्चेच्छोडशांशं विभज्य च।
कल्पयेदनिरुद्धस्य चतुरंशांस्तु मध्यमे।।

अथवा केवलं विष्णुमासीनं स्थितमेव वा।
अंशौ द्वौ पुरतस्त्यक्त्वा द्वारार्थं मुनिसत्तमाः।।

शेषेषु दशभागेषु मत्स्याद्यंशान् प्रकल्पयेत्।
यस्य यस्य च यो देशः कल्पितः पदकल्पने।।

अवस्थाभेदभिन्नानि तत्तद्रूपाणि तत्पदम्।
समभागं प्रकल्प्याऽत्र स्थापयित्वा समर्चयेत्।।

प्रधानाभिमुखान् कुर्यादवतारान् यथाक्रमम्।

**४.८.१५० दशावताराणाम् एकगर्भगृहप्रतिष्ठायां मत्स्यादिबेरलक्षणम्**

**ज्ञा.३७.६८**

बृहद्वृत्तविमाने गर्भागारं द्वादशधा विभज्य आग्नेय्यां पूर्वभागे तप्तहाटकसन्निभं रक्तपद्मारूढं वितस्तिविस्तृतं मत्स्यरूपं, पश्चिमे अञ्जनाभं षोडशाङ्गुलविस्तृतं तदर्धोच्छ्रयं कच्छपं चतुरश्रपीठसंस्थितं, वराहवदनं श्यामलं चतुर्भुजमुर्व्याश्रितोत्सङ्गं पीताम्बरधरं शङ्खचक्रयुतं नरवराहरूपं, दंष्ट्राकरालम्। सिंहास्यं सटाऽऽटोपं मुक्ताभकं चतुर्भुजं वीरासने संस्थितं नरसिंहं, वामनं श्यामाङ्गं ब्रह्मचारिव्रते स्थितं, जामदग्न्यं दूर्वाभं रक्तवल्कलसंवृतं टङ्कहस्तं जटाधरं, रामं रम्यविभूषणं चापबाणधरं सीरिणं बलभद्ररामं, कृष्णं यौवनशालिनं नीलकुञ्चितकुन्तलं लीलायष्टिधरं, कल्किनं रक्तसप्त्यधिरूढं भिन्नाञ्जनाभं कवचोज्वलसन्नाहं करवालकरम् एवम् आग्नेयादीशानान्तं द्वारपादं विहाय नवभागेषु दशावतारान् संस्थाप्य पश्चिमे भागे अनिरुद्धमादिभूतमनन्तात्मानं स्थापयेत्। एतेषां पृथक् पृथक् वा विमानं कल्पयेत्। एकत्र स्थापिते सर्वदानफलं सर्वयज्ञफलं प्राप्य विष्णुलोके महीयत इति विज्ञायते।

**४.८.१५१ दशावताराणाम् एकगर्भगृहस्थापने मत्स्यादिबेरमानादि**

**क्रि.३०.१०**

आदिमूर्तिसमं वाथ कर्णसीमान्तमेव वा।
अथवा बाहुसीमान्तं तद्बेराणि प्रकल्पयेत्।।

**४.८.१५२ दशावताराणाम् एकगर्भगृहस्थापने अर्चनत्रैविध्यम्**

**क्रि.३०.७ - ९**

ध्रुवकौतुकसंयुक्तं कुर्यात् प्रत्येकमुत्तमम्।
संस्थाप्य कौतुकं वाथ केवलं विहिते पदे।।

आदिमूर्तेः समावाह्य पूजयेदिति केचन।
अपादानं दशांशानाम् अनिरुद्धो यतः स्मृतः।।

एतन्मध्यममुद्दिष्टम् अधमं केवलं ध्रुवम्।
स्थापयित्वाऽग्रतः पीठे समावाह्य समर्चयेत्।।

# ९.केशवादिचतुर्विंशतिध्रुवबेरकल्पनम्

## ४.९.१ केशवादिचतुर्विंशतिध्रुवबेराणां विमानम्

**प्र. १७.३७**

सर्वेषां तु विमानानि विष्णोरुक्तवदाचरेत्।।

## ४.९.२ केशवध्रुवबेरस्य लक्षणम्

**प्र. १७.१ - ३**

अथ वक्ष्ये विशेषेण केशवादिविनिर्णयम्।
केशवं तु प्रकुर्वीत सौम्यरूपं चतुर्भुजम्।।

शङ्खचक्रगदापद्मधरं स्वर्णाभमेव च।
सर्वालङ्कारसंयुक्तं मुक्ताहारविभूषितम्।।

स्थितमेवं प्रकुर्वीत देवीभ्यां सहितं प्रभुम्।

## ४.९.३ नारायणध्रुवबेरस्य लक्षणम्

**प्र. १७. ३ , ४**

नारायणं प्रकुर्वीत घनश्यामं चतुर्भुजम्।।

शङ्खपद्मधरं देवं बिभ्रन्तं च गदामरिम्।
भूषितं मणिभूषाभिः पीतवाससमच्युतम्।।

## ४.९.४ लक्ष्मीनारायणध्रुवबेरस्य लक्षणम्

**प्र. १७.५ - १२**

प्रकुर्याच्च विशेषेण लक्ष्मीनारायणं शुभम्।

उत्तमं दशतालेन मानोन्मानप्रमाणतः।।
सिंहासने समासीनं दक्षिणाङ्घ्रिं प्रसार्य च।
आसने निहितं वामं लक्षणं पूर्ववत्तथा।।

लक्ष्मीं सन्न्यस्य वामोरौ मुखे हर्षसमन्विताम्।
प्रसारितकरां देवीं पञ्चतालप्रमाणतः।।

प्राञ्जलीकृतहस्तां तां सर्वाभरणभूषिताम्।
वामेन तां परिष्वज्य दक्षिणेनाऽभयप्रदम्।।

अन्याभ्यां च कराभ्यां च शङ्खचक्रधरं परम्।
तार्क्ष्यस्कन्धासनस्थं वा अन्यत्सर्वं च पूर्ववत्।।

तार्क्ष्यं नवार्धतालेन अर्धेषद्भ्रुकुटिं (?)मुखम्।
दक्षिणोरौ स्थितां लक्ष्मीं केचिदिच्छन्ति सूरयः।।

नागभोगे समासीनम् एवं कुर्यात्तु वा हरिम्।
सप्तभिः पञ्चभिर्वापि फणैर्विस्तारितैर्युतम्।।

शेषं सम्यक् प्रकुर्वीत समुत्तुङ्गशरीरिणम्।

**क्रि. ११.१३९ - १४३**

लक्ष्मीनारायणं वक्ष्ये सर्वसम्पत्करं वरम्।
वीशस्कन्धे समासीनं नारायणमनामयम्।।

सर्वमासीनवत्कृत्वा तस्योरौ दक्षिणे तथा।
देवीं श्रियं प्रकल्प्यैव सर्वाभरणभूषिताम्।।

प्राञ्जलीकृतहस्तां तां व्रीलाहर्षसमन्विताम्।
देवेशेनोपगूढां तां दक्षिणापरपाणिना।।

वामापरभुजो विष्णोः सम्यगूरौ निवेशितः।

एष एव विशेषः स्यात् अन्यत्सर्वं हरेरिव।।

वामोरौ कारयेल्लक्ष्मीमिति केचिद्वदन्ति च।

(वीशस्कन्धं विना केचित् एवमासीनमासने)

### ४.९.५ माधवध्रुवबेरस्य लक्षणम्

**प्र. १७.१२ - १३**

माधवं चोत्पलनिभं चक्रचापगदासिभिः।।

चतुर्भुजधरं कुर्यात् चित्रमाल्याम्बरं हरिम्।

### ४.९.६ गोविन्दध्रुवबेरस्य लक्षणम्

**प्र. १७.१३ - १४**

गोविन्दं पाण्डुराभं च चतुर्भुजधरं हरिम्।।

गदाशङ्खारिपद्मानि बिभ्रन्तं कारयेद् बुधः।

### ४.९.७ विष्णुध्रुवबेरस्य लक्षणम्

**प्र.१७.१४ - १५**

विष्णुं नीलोत्पलाभं तु शङ्खार्यब्जगदाभृतम्।।

सर्वाभरणसंयुक्तं पीतवाससमच्युतम्।

### ४.९.८ मधुसूदनध्रुवबेरस्य लक्षणम्

**प्र. १७.१५ - १६**

रक्तोत्पलाभं कुर्वीत देवं तु मधुसूदनम्।।

शङ्खार्यब्जगदापाणिं चतुर्भुजमनामयम्।।

### ४.९.९ त्रिविक्रमध्रुवबेरस्य लक्षणम्

**प्र .१७.१६ - १७**

त्रिविक्रमं नीलवर्णं शङ्खार्यब्जगदाभृतम्।।
चतुर्भुजधरं देवं सर्वाभरणभूषितम्।

### ४.९.१० वामनध्रुवबेरस्य लक्षणम्

**प्र. १७. १७, १८ . २०**

वामनं मेघवर्णं तु चतुर्बाहुं महाबलम्।।

गदाशङ्खारिपद्मानि बिभ्रन्तं चलरूपिणम्।

### ४.९.११ श्रीधरध्रुवबेरस्य लक्षणम्

**प्र. १७.२० , २१**

सितासिताभं कुर्वीत श्रीधरं तु चतुर्भुजम्।।

कौमोदकीशङ्खचक्रपद्मधारिणमीश्वरम्।

### ४.९.१२ हृषीकेशमूर्तिस्वरूपम्

**प्र. १७.२१ , २२**

हृषीकेशं प्रकुर्वीत श्यामाभं  च चतुर्भुजम्।।

गदाशङ्खारिपद्मानि बिभ्रन्तं हरिमव्ययम्।

### ४.९.१३ पद्मनाभध्रुवबेरस्य लक्षणम्

**प्र.१७.२२ , २३**

सितमेचकवर्णं तु पद्मनाभं प्रकल्पयेत्।।

कौमोदकीचक्रपद्मशङ्खपाणिं रमाधवम्।

### ४.९.१४ दामोदरध्रुवबेरस्य लक्षणम्

**प्र. १७.२३ , २४**

दामोदरं प्रकुर्वीत सितगौराभमीश्वरम्।।

पद्मशङ्खगदाचक्रधरं देवं चतुर्भुजम्।

### ४.९.१५ सङ्कर्षणध्रुवबेरस्य लक्षणम्

**प्र .१७.२४ , २५**

सङ्कर्षणं तु कुर्वीत श्वेतवर्णं चतुर्भुजम्।।

शङ्खार्यब्जगदापाणिं सर्वाधारं सनातनम्।

### ४.९.१६ वासुदेवध्रुवबेरस्य लक्षणम्

**प्र. १७.२५ , २६**

वासुदेवं प्रकुर्वीत तरुणादित्यसन्निभम्।।

शङ्खचक्रगदापद्मधरं सर्वधरं विभुम्।
चन्द्राभं नवकुन्दाभम् अथवा कारयेद्धरिम्।।

### ४.९.१७ प्रद्युम्नध्रुवबेरस्य लक्षणम्

**प्र. १७. २७**

प्रद्युम्नं तु सुवर्णाभं कुर्याद्देवं चतुर्भुजम्।
चक्रशङ्खगदापद्मधरं देवं महाबलम्।।

### ४.९.१८ अनिरुद्धध्रुवबेरस्य लक्षणम्

**प्र. १७.२८**

अनिरुद्धं हिरण्याभं सर्वालङ्कारसंयुतम्।
शङ्खचक्रधनुःखड्गधरं देवेश्वरेश्वरम्।।

### ४.९.१९ पुरुषोत्तमध्रुवबेरस्य लक्षणम्

प्र. १७.२९

सितासिताभं कुर्वीत देवेशं पुरुषोत्तमम्।
शङ्खचक्रगदापद्मधरं देवं चतुर्भुजम्।।

### ४.९.२० अधोक्षजध्रुवबेरस्य लक्षणम्

प्र. १७.३०

अधोक्षजं प्रकुर्वीत शङ्खाभं च चतुर्भुजम्।
चक्रशङ्खगदापद्मधरं भूषणभूषितम्।।

### ४.९.२१ नारसिंहध्रुवबेरस्य लक्षणम्

प्र.१७.३१

नारसिंहं तु मेघाभं सर्वालङ्कारसंयुतम्।
शङ्खपद्मगदाचक्रधरं भक्ताभयप्रदम्।।

### ४.९.२२ अच्युतध्रुवबेरस्य लक्षणम्

प्र.१७.३२

सितमेचकवर्णं तु कुर्वीत विभुमच्युतम्।
गदाब्जचक्रशङ्खाङ्कं चतुर्भुजविराजितम्।।

### ४.९.२३ जनार्दनध्रुवबेरस्य लक्षणम्

प्र.१७.३३, ३४

जनार्दनमुदाराङ्गं नीलवर्णं समाचरेत्।
चक्रशङ्खगदापद्मधरं देवं सनातनम्।।

अथ वा कटिविन्यस्तवामहस्तं प्रकल्पयेत्।

## ४.९.२४ उपेन्द्रध्रुवबेरस्य लक्षणम्

**प्र.१७.३४ , ३५**

उपेन्द्रं घनकृष्णाभं सर्वाभरणभूषितम्।।

शङ्खचक्रगदापद्मधरं देवं जगत्प्रभुम्।

## ४.९.२५ हरिध्रुवबेरस्य लक्षणम्

**प्र.१७.३५ , ३६**

हरिं पाण्डुरकृष्णाभं सर्वालङ्कारशोभितम्।।

शङ्खपद्मगदाचक्रधरं कुर्यान्मनोहरम्।

## ४.९.२६ कृष्णध्रुवबेरस्य लक्षणम्

**प्र.१७. ३६, ३७**

कृष्णं तु नीरदश्यामं पुण्डरीकनिभेक्षणम्।।

शङ्खचक्रगदापद्मधरं कुर्याद्विचक्षणः।

## १०. वासुदेवादिपञ्चवीरध्रुवबेरकल्पनम्

### ४.१०.१ पञ्चवीराणां परिगणनम्

**ज्ञा. ८६.१६३**

वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धसाम्बाः पञ्चवीराः इति विज्ञायते।

### ४.१०.२ पञ्चवीरध्रुवबेराणां वास्तुविशेषाः

**क्रि. ३०.११० , १११**

ग्रामान्ते नगरान्ते वा पर्वतान्ते वनान्तरे।।

नदीसमुद्रतीरेषु विविक्तेऽन्यत्र कुत्रचित्।
पञ्चवीरविधानेन प्रतिष्ठाप्य समर्चयेत्।।

### ४.१०.३ पञ्चवीरध्रुवबेराणां विमानविशेषाः

**क्रि. ३०. ४४ - ४५**

नदी(न्दी) विशालमष्टाङ्गं सोमच्छन्दं चतुःष्फुटम्।
सर्वतोभद्रकं वापि गोपुराकृतिकं तु वा ।।

एकतलं द्वितलं वापि कल्पयित्वा यथाविधि।
आदिभूमिं घनं कुर्यात् द्वितीये स्थापयेत्तले।।

### ४.१०.४ पञ्चवीरध्रुवबेराणामालये स्थापनस्थानम्

**क्रि.३०.५१**

स्थापयेद्वासुदेवादीन् पञ्च वै मानुषे पदे।

### ४.१०.५ सपरिवाराणां पञ्चवीरध्रुवबेराणां लक्षणम्

**क्रि.३०.५१ - ६३**

स्थापयेद्वासुदेवं तं ब्रह्मसूत्रात्तथोत्तरे।।

श्यामलं द्विभुजं देवं शङ्खचक्रसमन्वितम्।
पद्मपत्रायतदृशं प्रसन्नेन्दुनिभाननम्।।

पीताम्बरधरं देवं सर्वाभरणभूषितम्।
दक्षिणे रुक्मिणीं देवीं श्यामां रक्ताम्बरोज्ज्वलाम्।।

मीनकुण्डलताटङ्कां यज्ञसूत्रविराजिताम्।
ताटङ्कं दक्षिणे कर्णे वामे मकरकुण्डलम्।।

कुञ्चितं दक्षिणं पादं वामपादं च सुस्थितम्।
करं प्रसारितं वामं दक्षिणं वरदं तथा।।

अथवा दक्षिणेनैव दिव्यपङ्कजधारिणीम्।
तस्याश्च दक्षिणे भागे बलदेवं प्रकल्पयेत्।।

श्वेताभं द्विभुजं कुर्यात् दक्षिणेनाभयप्रदम्।
उद्देशवामहस्तं च सर्वाभरणभूषितम्।।

दक्षिणे भित्तिपार्श्वे तु ब्रह्माणं कनकप्रभम्।
द्विभुजं कटिकं वामं दक्षिणेनाभयप्रदम्।

उदङ्मुखं स्थितं कुर्यात् सर्वाभरणभूषितम्।
उत्तरे वासुदेवस्य प्रद्युम्नं द्विभुजं स्थितम्।।

सस्यश्यामनिभं कुर्यात् सर्वाभरणभूषितम्।
अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम्।।

उत्तरां भित्तिमाश्रित्य साम्बं च द्विभुजं स्थितम्।
दक्षिणाभिमुखं श्यामं सर्वाभरणभूषितम्।।

वरदं दक्षिणं हस्तं वामं कट्यवलम्बितम्।
तत्प्राच्यामनिरुद्धं च प्रवालाभं प्रकल्पयेत्।।

अभयं दक्षिणं हस्तं वामं कट्यवलम्बितम्।
दक्षिणाभिमुखं चैव सर्वाभरणभूषितम्।

### ४.१०.६ सपरिवारपञ्चवीरध्रुवबेरमानम्

**क्रि, ३०,१२**

प्रमाणं पञ्चवीराणां ब्रह्मणो गरुडस्य च।
वासुदेवसमं वाथ बाह्वन्तं वाधिकं न च।।

**क्रि.३०.४६ - ५०**

गर्भव्यासांष्टभागैकहीनोच्चे वसुदेवजे।
त्रयस्त्रिंशतिदण्डैकाधिकः सङ्कर्षणोदयः।।

वासुदेवाधिकोत्सेधो बलभद्रो नु दैविके।
प्रद्युम्नो वासुदेवस्य कर्णसीमान्तकोदयः।।

तस्य स्तनावसानोच्चौ रुक्मिणी साम्ब एव च।
वासुदेवस्य हिक्कान्तस्त्वनिरुद्ध उदाहृतः।।

वासुदेवसमोत्सेधं कल्पयेत्कमलासनम्।
समष्टिरूपमेतेषां मध्ये विष्णुं प्रकल्पयेत्।।

स्थावरं जङ्गमं चापि तथा स्थावरजङ्गमम्।
श्रीभूमिसहितं कुर्यात् रहितं वा यथाविधि।।

**क्रि.३०.६४ - ६६**

कल्पयेद्दशतालेन वासुदेवं हलायुधम्।
ब्रह्माणं चान्यदेवांस्तान् अध्यर्धनवतालतः।।

दशतालोत्तमेनैव मध्ये विष्णुं प्रकल्पयेत्।
स्थावरं दैविके भागे पदे ब्राह्मे तु जङ्गमम्।।

वासुदेवसमोत्सेधं स्थावरं समुदाहृतम्।
सर्वानुकूलमानेन केवलं जङ्गमं यदि।।

### ४.१०.७ अन्नप्रजापतिबिम्बलक्षणम्

**क्रि.३० . ६९**

अन्नप्रजापतिं कुर्यात् प्राच्यामेवानिरुद्धतः।
भूताकारं प्रकुर्वीत द्विभुजं वा चतुर्भुजम्।।

### ४.१०.८ गर्भगृहे पञ्चवीरपरिवाराणामर्चनस्थानम्

**क्रि.३०.७० - ७६**

एष एव विशेषः स्यात् अन्यत्सर्वं हरेरिव।

### ४.१०.९ पञ्चवीरध्रुवबेराणामर्चने फलम्

**क्रि.३०.४२ - ४३**

पुष्टिदं सर्वलोकानां सर्वाध्वरफलावहम्।।

पञ्चवीरार्चनं ह्येतत् वेदवैदिकवर्धनम्।
सर्वैश्वर्यप्रदं नृणां मुक्तिदं सर्वसिद्धिदम्।।

# ११. आदिमूर्त्यादिध्रुवबेरकल्पनम्

**४.११.१ आदिमूर्तिध्रुवबेरस्थापने विमानविशेषाः**

**खि. १९. २३३ , २३४**

अत ऊर्ध्वं प्रवक्ष्यामि आदिमूर्तेस्तु स्थापनम्।
मूर्तीनामनिरुद्धस्तु सर्वासामादिरुच्यते।।

कुम्भाकारविमानं वा चतुर्मुखमथापि वा।
सोमच्छन्दं त्रिकूटं वा श्रियावृत्तमथापि वा।
पूर्वोक्तेन विधानेन विमानं सम्यगाचरेत्।।

**स. ६२. १**

कुम्भाकारे त्रिकूटे वा नन्द्यावर्तेऽथवा पुनः।।

**४.११.२ सपरिवारस्य सुखासीनस्य आदिमूर्तेर्लक्षणम्**

**स. ६२.७ - ११**

--------------वक्ष्यतेऽद्य सुखासनम्।।

वामहस्तं तथा वामे जानौ सम्यक् प्रसार्य च।
हस्तं च दक्षिणं जानौ विन्यसेद्दक्षिणे क्रमात्।।

सिंहासने सुखासीनं श्रीभूम्यावपि कारयेत्।
पूर्वोक्तैर्लक्षणैर्युक्तं सर्वाभरणभूषितम्।।

नारसिंहवराहौ द्वौ पूजकौ तु समाचरेत्।
नवतालक्रमेणैव तत्तद्रूपं प्रकल्पयेत्।।

प्राञ्जलीकृतहस्तौ तु सर्वाभरणभूषितौ।
एवं सुखासनं कुर्यात्---------- ।।

### ४.११.३ योगासनस्थस्य आदिमूर्तिध्रुवबेरस्य लक्षणम्

**खि. १९. २३५ - २४३**

आदिमूर्तिं च कुर्वीत अनन्तासनसंयुतम्।
पूर्वादिवृत्तं कुर्वीत त्रिरावृत्या प्रदक्षिणम्।।

वृत्तं समं प्रकुर्वीत सर्पाकारसमन्वितम्।
तस्य मध्ये सुखासीनं सर्पभोगे तथाऽऽश्रितम्।।

उपधानं सर्पभोगे कृत्वा चैव शनैश्शनैः।
मकुटोपरि सञ्छाद्य विषवेगसमन्वितान्।।

फणानां पञ्चवर्णानां युतं पञ्चभिरादरात्।
बेरायामसमायाममनन्तासनमिष्यते।।

प्रसार्य दक्षिणं पादं वाममाकुञ्च्य सुस्थितम्।
शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।।

अनिरुद्धं रक्तवर्णं प्रवालसदृशद्युतिम्।
पूर्वोक्तेन प्रमाणेन कारयेद् बिम्बमुत्तमम्।।

नारसिंहवराहाभ्यामर्चितं वादिदैवतम्।
दक्षिणे नारसिंह च वामे वाराहमर्चयेत्।।

एकजानुक्रमेणैव तौ स्ववर्णसमायुतौ।
पुष्पाञ्जलिसमायुक्तौ देवदेवं समीक्ष्य वै।।

मध्ये ब्रह्मस्थानभित्त्योः पूजकस्थानमिष्यते।
अर्चयित्वा विधानेन पूर्वोक्तेन क्रमेण तु।
उत्सवं स्नपनं चैव बल्यादीन् पूर्ववच्चरेत्।।

**स. ६२. २ - ७**

अनन्तोत्सङ्ग आसीनं प्रवालाग्निसमप्रभम्।
बेरायामं त्रिधा कृत्वा तत्रैकं पीठमाचरेत्।।

अनन्तस्य तु सम्प्रोक्तास्सप्त पञ्च फणास्तु वा।
अङ्गोपरि फणाः कृत्वा ऊर्ध्वे सञ्छादकाः क्रमात्।।

त्रिवृते सर्पदेहोर्ध्वे समासीनं हरिं परम्।
वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च।।

शङ्खचक्रधरं कुर्यात् सर्वाभरणभूषितम्।
सर्पदेहोर्ध्वतः पाणिं दक्षिणं सन्न्यसेत्तथा।।

वामं च कुञ्चितं जानुं न्यसेत् सम्यक् प्रसारितम्।
विधिनैव समासीनमादिमूर्तिं तु कारयेत् ।।

भृगुपुण्यौ तथा कुर्यात्पूजकौ स्थानमाश्रितौ।
एवं योगासनं प्रोक्तं----------------।

### ४.११.४ गजेन्द्रमोक्षणध्रुवबेरस्य लक्षणम्

**खि. १९. २४४ - २५०**

गजेन्द्रस्य तु मोक्षार्थं शिंशुमारवधाय च ।।

गरुडस्कन्धमारुह्य ग्राहसंसृष्टचक्रकम्।

शङ्खं शार्ङ्गं च वामाभ्यां धरन्तं वेगसंयुतम्।।

उद्धृत्य दक्षिणं पाणिं किञ्चिदालोलकुन्तलम्।
एवं चतुर्भुजं कुर्यात्कृपारोषसमन्वितम्।।

इषुधिभ्यां च संयुक्तं शिंशुमारनिरीक्षणम्।
अर्धज्यागतमार्गेण चासीनं पीतवाससम्।।

तार्क्ष्यं दक्षिणहस्तेन स्पृशन्तं स्फुरिताधरम्।
ग्राहे साचीकृतावाहमर्धेषद्भ्रुकुटीमुखम् ?।।

जलस्थशिंशुमारेण ग्रस्ताङ्घ्रिं पुरतः स्थितम्।
ऊर्ध्वाननं गजेन्द्रं च पुष्करोद्धृतपङ्कजम्।।

कृत्वैवं पूजयद्देवं विष्णुं गरुडवाहनम्।

## ४.११.५ त्रैलोक्यमोहनध्रुवबेरस्य लक्षणं तस्य पूजाफलं च
### खि. १९. २५० - २५४

त्रैलोक्यं मोहितं येन यद् रुषा कृपयाऽपि च।।

त्रैलोक्यमोहनं नाम प्रतिमां परिकल्पयेत्।
तस्य पूजनया लोकः त्रिलोकविजयी भवेत्।।

ऐहिकामुष्मिकं सर्वं लभते नात्र संशयः।
शत्रुक्षयो भवेच्चैव सर्वाभीष्टं च सिध्यति।।

किंकुर्वाणा भवन्त्यस्य प्राणिनः सर्वदा भुवि।
अन्ते कलेवरं त्यक्त्वा सायुज्यं लभते हरेः।।

लोहाद्यैः प्रतिमां कुर्याच्चित्राभासेऽथवा हरिम्।

पूजयेदुक्तमार्गेण विष्णुं गरुडवानम्।
अनेनैव तु मार्गेण तस्य स्युः सर्वसम्पदः ।।

### ४.११.६ सूर्यमण्डलान्तस्थमूर्तेः लक्षणम्

**खि. १९. २५५ - २५९**

अतः परं प्रवक्ष्यामि आविर्भावेषु चोत्तमम्।
अन्यद्रूपं सूर्यमण्डलान्तस्स्थं कमलासने।।
समासीनं हिरण्याभं शङ्खचक्रगदाधरम्।
हारकेयूरमकरकुण्डलाञ्चितविग्रहम्।।

पीतेन वाससा चान्यैर्दिव्यैर्दिव्याम्बरैर्युतम्।
रक्तास्यपाणिचरणं श्रीवत्साङ्कं चतुर्भुजम्।।

योगासनसमायुक्तं भ्राजमानं सुखोद्वहम्।
एवं सङ्कल्प्य यत्नेन योगाद्यैरर्चयेद्धरिम्।।

बिम्बं कर्तुमशक्तश्चेद् ध्यायेदादित्यमण्डले।
सायुज्यमाप्नुयात्तेन नरो निर्धूतकल्मषः।।

### ४.११.७ सपरिवारस्य अनन्तशयनध्रुवबेरस्य लक्षणम्

**खि. १९. २६० - २६३**

अथ प्रपूजयेद्देवमनन्तशयनं हरिम्।
क्षीरार्णवे शेषभोगे योगनिद्रावशं गतम्।।

सहस्रफणसञ्छन्नमूर्धभागं तथाऽम्बुधौ।
नाभिसञ्जातपद्मोदरासीनचतुराननम्।।

दिव्याभरणसंयुक्तं देवीभ्यां मृदिताङ्घ्रिकम्।

पञ्चायुधैः परिवृतं मधुकैटभसेवितम्।।

सताक्ष्यं ताक्ष्यरहितं द्विभुजं वा चतुर्भुजम्।
चित्रे वाऽऽभासके वाथ पूजयेत्सर्वसिद्धये।।

### ४.११.८ अनिरुद्धादिपञ्चमूर्त्यर्चनविधिः

**खि. १९. २६४, २६५**

अथवा(चा?)राधयेद्देवमादिमूर्तिं सनातनम्।
अनिरुद्धं तस्य पूजाप्रकारः पूर्वमीरितः।।

विष्णुं च पुरुषं चैव सत्यं चैवाच्युतं तथा।
समाहत्य तु पञ्चापि मूर्तीर्विधिवदर्चयेत्।।

### ४.११.९ श्रीधरध्रुवबेरस्य लक्षणम्

**खि. १९. २६६, २६७**

तथा श्रीधरमूर्तिं च पूजयेद्धृदये क्वचित्।
चन्द्रमण्डलमध्ये तु सुखासीनं तु श्रीधरम्।।

मुक्तादामावृतं चैव शङ्खचक्रधरं तथा।
मुक्ताफलैरेव कृतैः भूषणैस्सुविभूषितम्।
श्रीधरं प्रतिमां कृत्वा पूजयेत्सर्वसिद्धये।।

### ४.११.१० विश्वरूपधरध्रुवबेरस्य लक्षणम्

**खि. १९. २६८ - २७०**

विश्वरूपं च देवेशं पूजयेद्दैवतं तथा।
अनेकभुजसंयुक्तमनेकायुधधारिणम्।।

अनेकदेवतोपेतमनेकाभरणाज्वलम्।
अनेकविस्मयोपेतं वन्द्यमानं सुरादिभिः।।

तथा दन्तसहस्रान्तर्विलीनजगदन्तरम्।
स्थितं कृत्वाऽर्चयेद्विद्वान् सर्वशत्रुक्षयाय वै।
सर्वोपद्रवनाशार्थं सर्वकार्यार्थसिद्धये।।

## ४.११.११ हरिहरध्रुवबेरलक्षणम्

**खि. १९. २७१ , २७३**

हरिशङ्करमन्यं वै पूजयेद् भक्तिसंयुतः।
अर्धं वैष्णवरूपं च अथाऽर्धं शाङ्करं वपुः।।

रूपं लक्षणवत्कृत्वा पूजयेत्तु विचक्षणः।
वैष्णवैश्च तथा रौद्रैर्मन्त्रैः स्थापनमाचरेत्।।

शेषं युक्त्या प्रकुर्वीत अर्चनादिकमादरात्।

# १२. नवमूर्त्यादिध्रुवबेरकल्पनम्

## ४.१२.१ नव मूर्तयः

**प्र. १३ . १, २**

अत ऊर्ध्वं प्रवक्ष्यामि नवषट्पञ्चमूर्तिकम्।
विष्णुं च पुरुषं सत्यम् अच्युतं चानिरुद्धकम्।।

नरनारायणाभ्यां तु वाराहं नारसिंहकम्।
एवं तु नवमर्तीस्तु स्थापयित्वा यथाविधि।।

**वा. १ वा. ५**

## ४.१२.२ नवमूर्तिविमानकल्पनम्

**वि. ३५ . २४४**

सहस्राधिकविप्रावासे ग्रामे, मध्ये, पश्चिमे वा, नवहस्ताद्येकषष्टिहस्तान्तं द्विहस्तविवृद्ध्या, सप्तविंशतिभेदेषु इष्टमानं विनिश्चित्य तत्रैकाशीतिविभागं कृत्वा, मध्ये पञ्चविंशतिभागमूर्ध्वतलकरणार्थं दृढतरं यथालक्षणं परिकल्प्य, तत्परितः प्रागादिचतुर्दिक्षु पुरुषसत्याच्युतानिरुद्धानां गर्भागारं दशभागं तत्प्रमुखे निर्गमं युक्त्या कृत्वा, तत्समं प्राच्यां मुखमण्टपं सत्यादीनां मुखमण्टपं तद्गर्भागारसमं, त्रिपादमर्धं वाप्येवं विमानं नलिनकाद्यलङ्कारयुतं चतुर्मुखं चतुर्द्वारं चतुष्कूटं त्रिशालं हारापञ्जरनासिकाद्यैस्सह कृत्वा, द्वितीयतले विस्तारं पूर्ववदेकाशीतिभागं कृत्वा, तन्मध्ये पञ्चविंशतिभागं विष्णोरादिमूर्तेरासनागारं, तत्परितोऽलिन्द्रं चतुर्विंशतिभागं, तद्बाह्ये द्वात्रिंशद्भागं बाह्यकुड्यं, कूटशालाद्यैरुपशोभितं मुखमण्टपसोपानसंयुक्तं कृत्वा, तस्यालिन्द्रे दक्षिणे

नरनारायणयोर्दक्षिणेनागारं पश्चिमे नृसिंहस्य, उत्तरे वाराहस्य चागारं युक्त्या परिकल्प्य, तृतीयतलविस्तारायामं यथालक्षणं देवेशस्य शयनागारं मुखमण्टपसंयुक्तमेवं त्रितलैर्युक्तं नवमूर्त्तिविमानं कारयेत्।

## ४.१२.३ नवमूर्त्तिविमाने अधस्तले स्थापनीयस्य पुरुषस्य लक्षणम्

### वि. ३६ . २५०

अधस्तले प्राच्यां पुरुषं भोगासनमार्गेणासीनं पूजकमुनिभ्यां बह्मशङ्कराभ्यां अपरभित्यूर्ध्वभागे श्वेतच्छत्रेण, वामयोः चामरधारिणीभ्यां मायासंह्लादिनीभ्यां सनकसनत्कुमाराभ्यां चन्दसूर्याभ्यां च युक्तं कारयेत्। प्रथमद्वारे तुहिणबलिन्दौ द्वितीयद्वारे शङ्खपद्मनिधी द्वारसोपानस्थले भित्तौ प्राङ्मुखीं श्रियं, वारणाभिषेकयुक्तां कारयेत्।

## ४.१२.४ नवमूर्त्तिविमाने अधस्तले स्थापनीयस्य सत्यस्य लक्षणम्

### वि. ३६ . २५०

दक्षिणे सत्यमूर्तिं दक्षिणामुखं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां अपरभित्यूर्ध्वभागे छत्रेण चामरधारिणीभ्यां जयाभद्राभ्यां सूर्यचन्द्राभ्यां शुक्रबृहस्पतिभ्यां युक्तं प्रथमद्वारे नासत्यदस्रौ द्वितीयद्वारे चक्रशङ्खचूलिनौ दक्षिणे सोपानस्थलभित्तौ दक्षिणामुखं वाग्देवीं च कारयेत्।

## ४.१२.५ नवमूर्त्तिविमाने अधस्तले स्थापनीयस्य अच्युतस्य लक्षणम्

### वि. ३६ . २५०

पश्चिमे पश्चिमाभिमुखम् अच्युतं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां अपरभित्यूर्ध्वभागे छत्रेण चामरधारिणीभ्यां जयाभद्राभ्यां सूर्यचन्द्राभ्यां युक्तं, प्रथमद्वारे गुहजाम्बवौ, द्वितीयद्वारे शङ्खपद्मनिधी, सोपानस्थलभित्तौ पश्चिमामुखं मन्मथं कारयेत्।

## ४.१२.६ नवमूर्त्तिविमाने अधस्तले स्थापनीयस्य अनिरुद्धस्य लक्षणम्

**वि. ३६ . २५० , २५१**

उत्तरे चोत्तराभिमुखम् अनिरुद्धं देवीभ्यां सहितं रहितं वा पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां परभित्यूर्ध्वभागे छत्रेण चामरधारिणीभ्यां जयापुष्टिकाभ्यां सूर्यचन्द्राभ्यां युक्तं , प्रथमद्वारे विद्युदप्सरसो द्वितीयद्वारे चक्रशङ्खचूलिनौ सोपानस्थलभित्तौ चोत्तराभिमुखं मुद्गलं मुनिं च कारयेत्।

## ४.१२.७ नवमूर्त्तिविमाने मध्यमतले स्थापनीयानि सपरिवाराणि विष्णवादिध्रुवबेराणि

**वि. ३६ . २४९**

मध्यमतले विष्णुमादिमूर्तिं सिंहासने समासीनं श्रीभूमिभ्यां, भृगुपुण्याभ्यां, ब्रह्मशङ्कराभ्यां, युक्तं, उपरि भित्त्यूर्ध्वभागे दक्षिणवामयोर्वन्दमानौ चामरधारिणौ किष्किन्धसुन्दरौ च कामिनी व्याजिनीभ्यामर्कचन्द्राभ्यां युक्तं, प्रथमद्वारस्य दक्षिणे तुहिनं, वामे बलिदं, द्वितीयद्वारे तापससिद्धिदौ च, तस्यालिन्द्रे दक्षिणामुखौ नरनारायणौ स्थितौ, प्रजापतिशङ्कराभ्याम् अर्चकमुनिभ्यां कामिनीव्याजिनीभ्याम् अर्कचन्द्राभ्यां युक्तौ द्वारस्य दक्षिणवामयोः चक्रचूलिशङ्खचूलिनौ च तस्यालिन्द्रे पश्चिमे नृसिंहं योगासने समासीनं कक्ष्ययोराबद्धं, ब्रह्मशङ्कराभ्यामर्चकमुनिभ्याम् अर्कचन्द्राभ्यां युक्तं, द्वारस्य दक्षिणवामयोः चण्डप्रचण्डाभ्यां सहैव कुर्यात्।।

तस्यालिन्द्रे चोत्तरे चोत्तरामुखं वाराहं, पूर्ववत् देवस्य दक्षिणे चन्द्रं, वामे हलेशं पूजकमुनी ब्रह्मशङ्करौ अपरभित्यूर्ध्वभागे सनकसनत्कुमारौ चन्द्रादित्यौ द्वारदक्षिणवामयोर्दुर्गां, विघ्नेशं च कुर्यात्।

## ४.१२.८ नवमूर्त्तिविमाने तृतीयतले स्थापनीयस्य सपरिवारस्य आदिमूर्तेः लक्षणम्

### वि. ३६ . २५१

तृतीयतले योगशयनं दक्षिणशीर्षम् अनन्तस्य सप्तभिः पञ्चभिर्वा फणैः छन्नमौलिं द्विभुजं पूजकस्थाने महीमार्कण्डेयौ देवस्य दक्षिणहस्तं मार्कण्डेयशिरसि न्यस्तं वामं समुद्धृतकटकं पादं दक्षिणं प्रसारितमीषत्कुञ्चितं नाभ्यम्बुजसमासीनं ब्रह्माणं पञ्चायुधान् गरुडं च उद्देश्यकरतलप्रहारयुक्तं(?) पादपार्श्वे मधुकैटभौ च दक्षिणपार्श्वे कर्किणं सनकं वामे भारतीं सनत्कुमारं ऊर्ध्वे वेदान् दक्षिणोत्तरयोः ब्रह्मशङ्करौ प्रथमद्वारे गङ्गायमुने, द्वितीयद्वारे सुरसुन्दरौ च कारयेत्। ब्रह्मस्थाने कौतुकं चतुर्भुजं शङ्खचक्रधरम् अनन्तोत्सङ्ग आसीनं फणैः सप्तभिः पञ्चभिर्वा छन्नमौलिं कारयेत्।।

आदिमूर्तीनां सर्वासां मूर्तीनां तत्तत्कौतुकबिम्बानां पूर्वोक्तविधिना तत्तद्ध्रुवबेरानुरूपं, विष्णुं चतुर्भुजं वा, कारयेत्। इन्द्रादिलोकपालानाम् अन्येषां परिवाराणां नवभेदेष्वेकमार्गेण नवषट्पञ्चमूर्तीः विमाने कारयेत्।।

## ४.१२.९ एकतलप्रासादे नवमूर्तिध्रुवबेरावस्थानम्

### वि. ३५ . २४५, २४६

एवं यथोक्तविधिना सर्वाणि ध्रुवबेराणि कर्तुमशक्तश्चेत् उक्तविमानेष्वेकस्मिन् विमाने चैकतलप्रासादं नवहस्तादहीनं निश्चित्य तस्मिन्नेकाशीतिविभागं कृत्वा तन्मध्ये नवभागं गर्भागारं, तत्परितः षोडशभागमभ्यन्तरं तत्परितश्चतुर्विंशति-भागमलिन्द्रं, तद्बाह्ये द्वात्रिंशद्भागं बाह्यकुड्यं कारयेदित्येके। तत्समं त्रिपादमर्धं वा, मुखमण्टपं दक्षिणपश्चिमोत्तरं मूर्तीनां द्वारदेशे जालकैर्युक्तं बाह्यभित्तिविस्तारसमभ्यन्तरभित्तिविस्तारं सप्तदशोत्सेधमर्धाधिकं पादोनद्विगुणं द्विगुणं वा विमानोत्सेधं तदष्टभागं कृत्वा, एकांशमधिष्ठानं, तद्द्विगुणं

स्तम्भायाममेकांशं प्रस्तरं, बाह्यभित्तौ संयोज्य अभ्यन्तरभित्तेः उपरि कण्ठमेकांशं, द्व्यंशं शिखरं, एकांशा पिण्डि(स्थूपि) केत्येवमेकतलप्रासादं परिकल्प्य तस्मिन् गर्भालये दैविके भागे विष्णुमादिमूर्तिं भोगासनमार्गेण ध्रुवबेरं प्रतिष्ठाप्य, पुरुषादि-मूर्तीनामादिमूर्तेः भिन्नत्वात् ध्रुवबेरं विना आदिमूर्तेरनुरूपं विष्ण्वादीनि सर्वाणि कौतुकबेराणि विधिना कारयित्वा गर्भागारे ब्रह्मपदे विष्णुमादिमूर्तिमलिन्द्रे द्वारदक्षिणे प्राङ्मुखं पुरुषं, दक्षिणे सत्यं, पश्चिमे अच्युतम्, उत्तरे अनिरुद्धं द्वारस्योत्तरपार्श्वे शयानं दक्षिणे सत्यस्य पश्चिमे नरनारायणौ,पश्चिमे अच्युतस्योत्तरे नृसिंहम्, उत्तरे अनिरुद्धस्य पश्चिमे वाराहं स्थापयेत्।।

अथवा तत्तद्भित्तावाभासं ध्रुवं सङ्कल्प्य ध्रुवकौतुकसंयुक्तं कारयेदिति केचित्। अथवा पुरुषादीनामभ्यन्तरभित्तौ गुहासु रत्नन्यासं कृत्वा कौतुकानेव स्थापयित्वा अर्चयेत्।

### ४.१२.१०द्वितलप्रासादे नवमूर्तिध्रुवबेरावस्थानम्

**वि. ३५ . २४७ - २४८**

अथवा द्वितलप्रासादमेवं कल्पयेत्। विमानोत्सेधं चतुर्दशभागं कृत्वा सार्धांशमधिष्ठानं, तद्द्विगुणं स्तम्भायामं सार्धांशं प्रस्तरं, बाह्यभित्तौ संयुज्य अलीन्द्रं विसृज्य अभ्यन्तरभित्तेरुपर्यूर्ध्वभूमेः पादं द्व्यर्धांशं, प्रस्तरमेकांशं सपादांशं कण्ठं, सपादद्व्यंशं शिखरम्, एकांशं स्थूपितुङ्गं, बाह्यभित्तेरुपरि कूटशालाद्यैरुपशोभितं मुखमण्डपचर्यासोपानादिभिर्युक्तं शिल्पिशास्त्रोक्तमार्गेण युक्त्या कृत्वा अधस्तले विष्णुं पूर्ववत्, ध्रुवकौतुकं संस्थाप्य पुरुषादीन् पूर्ववत् स्थापयेत्। ऊर्ध्वतले शयानं ध्रुवकौतुकसंयुक्तं कौतुकमेव वा मानुषपदे पीठे रत्नानि विन्यस्य, संस्थाप्य नृसिंहं द्वारस्योत्तरपार्श्वे अलीन्द्रे स्थापयेदिति विशेषः। अथवा कूटाकारमनर्पितं चतुर्वर्गयुक्तं सङ्कल्प्य

बाह्यभित्तिसमाभ्यन्तरभित्तौ सप्तदशोत्सेधं षडंशं कृत्वा, एकांशमधिष्ठानं, द्व्यर्धांशं स्तम्भतुङ्गं, द्व्यंशं शिखरम् , अर्धांशं स्थूपितुङ्गमिति एवं शिलयेष्टकया वा भित्तिं सङ्कल्प्य लुपाविधानेन कृत्वा लोहैर्लोष्ठैर्वाऽऽच्छाद्य उपरिस्थूपिकां (एकां) तिस्रः पञ्च, सप्त, नव वा कारयेत्। मुखमण्डपेन सार्धं वेति केचित्। ध्रुवबेरं विना विष्ण्वादिसर्वमूर्तीनां कौतुकानेव पूर्ववत् प्रतिष्ठापयेत्। उपरि तालार्धं विष्णुमूर्तेः प्राच्यामुन्नतपीठं कृत्वा तस्मिन्, भित्तौ गुहायां वा देवं कौतुकमेव संस्थाप्य, नृसिंहं द्वारवामे अलीन्द्रे स्थापयित्वाऽर्चयेत्। षट्पञ्चमूर्तिभ्योऽधिकमूर्तीर्विनैवं कुर्यात्।

### ४.१२.११ षण्मूर्तयः

**प्र. १३. २**

विष्ण्वादिपञ्चमूर्तेस्तु आदिमूर्तिं तथा क्रमात्।
स्थापयेत् तत्क्रमेणैवं षण्मूर्तिकमिहोच्यते।।

### ४.१२.१२ त्रितलविमाने षण्मूर्तिध्रुवबेरावस्थानम्

**वि. ३५ . २४५**

षण्मूर्तिप्रतिष्ठा चेत् [1]एवं विमानं त्रितलं कृत्वा नरनारायणनारसिंहान् विना तृतीयतले देवेशं शयानं द्वितीयतले विष्णुमादिमूर्तिम् अधस्तले पुरुषादीन् पूर्ववत् स्थापयेत्।

**वि. ३७ . २५९**

षण्मूर्तिप्रतिष्ठा चेत् विष्ण्वादिपञ्चमूर्तीशशयनं च यथोक्तविधिना (नवमूर्त्तिप्रतिष्ठोक्तविधिना) प्रतिष्ठापयेत्।

**प्र. १३. ३ ; वा. १**

---

1. नवमूर्त्तिप्रतिष्ठोक्तप्रकारेण

## ४.१२.१३ द्वितलविमाने षण्मूर्तिध्रुवबेरावस्थानम्

### वि. ३५ . २४५

अथ विमाने द्वितले अधस्तले विष्णुमादिमूर्तिं भोगासनमार्गेण प्रतिष्ठाप्य, तत्परितोऽलीन्द्रं चतुर्दिक्षु चतुर्द्वारयुतं यत्प्रधानं तन्मुखमण्टपं संयुक्तं कृत्वा, तत्प्राच्यामलीन्द्रे दक्षिणभागे भित्तिमाश्रित्य पुरुषं प्राङ्मुखं, दक्षिणेऽलीन्द्रे दक्षिणामुखं सत्यं तथैव पश्चिमे अच्युतं, उत्तरे अनिरुद्धं देवीभ्यां सहितं वा कृत्वा ऊर्ध्वतले योगेशं योगशयनं वा संस्थाप्यार्चयेत्।

## ४.१२.१४ पञ्चमूर्त्यर्चनस्यावश्यकता

### ज्ञा. ३५ . ६५ , ६६

अथ विश्वतश्चक्षुर्विश्वतोमुखाङ्घ्रिहस्तं विश्वात्मकं विश्वगर्भं विश्ववेतृ-विश्वेन्द्रियगुणाभासं विश्वेन्द्रियविवर्जितमनादिनिधनं व्योमाभं यत् ज्ञातृज्ञेय-ज्ञानविहीनं ज्ञानघनं तदेव जाग्रत् स्वप्नसुषुप्तितुर्यावस्थानगं बहिः प्रज्ञान्तः प्रज्ञप्राज्ञावस्थया वैश्वानरतैजसहृदयाकाशरूपेण स्थूलं प्रविभक्तमानन्दं भुञ्जानं ब्रह्म तुरीयं चतुष्पादमामनन्ति। तदेव ब्रह्म सत्त्वोत्कर्षनिकर्षाभ्यां प्राणिषु चतुर्धा भिद्यते। सत्त्वतः पादतोऽर्धतस्त्रिपादात्केवलाच्च धर्मज्ञानैश्वर्य-वैराग्यविषयाश्चतस्रो मूर्तयस्त्विमाः भवन्ति। आसु मूर्तिषु कूटस्थः सूक्ष्ममूर्तिः सत्तामात्रः। सोऽत्र परं ब्रह्म विष्ण्वाख्यः। अन्या मूर्तयः पुरुषसत्या-च्युतानिरुद्धाख्या अभ्यर्च्या भवन्ति। अतः चतुर्व्यूहात्मनो ब्रह्मणः सर्वगतस्य निरवयवस्य लिपेरिव कल्प्यानि रूपाणि भवन्ति। भक्त्या नियोजितौ-त्सुक्याद्व्युत्पन्नः तत्तदाकृतिः तत्तद्वाञ्छितान् ददाति। ज्ञान-गम्यस्याकर्तुरविकारिणः शुद्धस्याहेतुकस्यात्मनः पृथक्त्वं घटाकाशवत्। अग्नेः विष्फुलिङ्गा इव कालान्निमेषा इव ज्ञानांशा देवा भवन्ति। अंशैश्च

पालयन्ति लोकान्। तानेव पूजयन्त्येते भृग्वादयः।

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् इति तत्संश्लेषाल्लोकयात्रामूला देवी। तस्मात् तमनयैव सह देवेशम् अर्चयन्ति परमर्षयः। सा देवी श्रीरिति प्रोक्ता। सा प्रकृतिः। सा शक्तिः। तदभिन्नाः स्त्रियः सर्वाः। पुरुषास्तदभिन्नाः सर्वे। ताभ्यां स्थितिः। तस्मात् सहैवार्चयेत्। ताभ्यां यद्वर्तितं संसारचक्रं यत्सर्वलोकसारं सर्वप्राणिहृदि स्थितं हंसाख्यं चेतोरूपं तच्छङ्खम्। यः पृथिव्यादिपञ्चात्मा सर्वदेवमयः छन्दःपक्षः सर्वगः सर्वभूतात्मा अनादिनिधनः सुपर्णो गरुत्मान्। पृथ्वीवायुसंयोगाच्चापः शार्ङ्गम्। तेजोवायुमयो बाणः। विद्याविद्ये इषुधी। लोकालोकाद्रिः खेटकः। कृतान्तो नन्दकः। देहवानन्तरात्मा। सर्वेषां दण्डो दण्डः। ध्वजः अपराजिताधरः। भेरी शब्दात्मिका। लोकसन्तानभित्तिः नागः। अश्वः वायुसमवाय इति श्रुतयो गृणन्ति। तस्मादेतैः सहैव उभयत्र विहिते देवमर्चयेत्।

### ४.१२.१५ सृष्टेः पञ्चव्यूहात्मकत्वम्

**वा. ५**

व्यूहमेव तु सम्प्रोक्तम् उदितं ब्रह्मणा पुरा।।

अथ कृत्वा विशेषेण पृथक् पञ्चविधं स्मृतम्।
सृष्टिक्रमेण कर्तव्यं सर्वशास्त्रार्थदर्शनम्।।

आकाशाज्जायते वायुः स वायोर्जायतेऽनलः।
वह्नेश्च जायते तोयं तोयाच्च जायते इला।।

एवं क्रमेण यज्जातः तज्जातं पञ्चमूर्तिकम्।
आहूतोद्वासनादीनि विष्णुमूर्तिं समाचरेत् ।।

यथाक्रमेण पुरुषादीन् कर्तव्यं शास्त्रचोदितम्।
बीजस्थितिं च नेमिस्स्यात् पुरुषश्चैव संस्थितः।।

दक्षिणे सत्यमूर्तिस्तु सृष्टिबीजारविन्दकम्।
शङ्खं तु मुक्तिबीजेन तथा चैवापरेऽच्युतम्।।

गदासंहारबीजेन उत्तरे चानिरुद्धकम्।
एवं संस्थाप्य तन्मध्ये स्थापयित्वाऽऽदिमूर्तिकम्।।

तस्मात्सर्वप्रयत्नेन पद्मं चक्राम्बुजं तथा।
कौमोदकीयुतं देवं स्थापयित्वा समृद्धिदम्।।

गदापद्मं विना देवं स्थापयित्वा त्ववृद्धिदम्।
तस्मात्सर्वप्रयत्नेन ऊहित्वा स्थापयेद् द्विजः।।

विष्णुं च पुरुषं सत्यम् अच्युतं चानिरुद्धकम्।
तथैव पञ्चधा वह्निं शुद्धिञ्चैवानुपञ्चकम्।।

कालं पञ्चविधं ज्ञेयम् अभिगम्यादिपञ्चकम्।
आसनं पञ्चधा प्रोक्तं पृथिव्यादीनि पञ्चकम्।।

शब्दाश्चैतानि पञ्चैते श्रोत्राद्यादिषु पञ्चकम्।
प्राणापानादि पञ्चैते पृथक् वक्ष्येऽधुना शृणु।।

विष्णुश्चान्नमयः प्रोक्तः प्राणः पुरुष उच्यते।
सत्यं मनोमयं विद्यात् विज्ञानस्याच्युतं तथा।।

आनन्दस्यानिरुद्धं च पञ्चमूर्तीति केचन ।
तस्माच्चैवादिमूर्तिं च भ्रामयेत बलिक्रमम्।

ब्रह्माग्निं पञ्चधा सृष्ट्वा पञ्चलोकेषु कल्पयेत्।
गार्हपत्याहवनीयमन्वाहार्यावसथ्यकम्।।

सभ्याग्निं पञ्चधा वह्निः पञ्चमूर्त्यधिदैवतम्।
देहशुद्धिं तथा स्मृत्वा पात्रशुद्ध्यात्मशुद्धिकम्।।

बेरशुद्धिस्तु पञ्चैते पञ्चधा शुद्धिरुच्यते।
प्रातः कालेऽभिगमनम् उपादानं ततः परम्।।

मध्याह्नेज्यां प्रकुर्वीत  स्वाध्यायं चापराह्णके।
योगं सायाह्नकाले तु पञ्चकालमुदाहृतम्।।

पूर्वं मन्त्रासनं कुर्यात्स्नानासनमतः परम्।
तृतीयं चाप्यलङ्कारं भोज्यासनं चतुर्थकम्।।

यानासनं च पञ्चैवं त्वासनं पञ्चधा भवेत्।
प्रथमं पृथिवी ज्ञेयं जलं चात्र द्वितीयकम्।।

तेजोमयं तृतीयं स्यात् चतुर्थं वायुरेव च।
आकाशश्चात्र पञ्चैते पृथिव्यादीनि पञ्चधा।।

शब्दश्च स्पर्शनं चैव रूपं चैव रसस्तथा।
गन्धश्चैवात्र पञ्चैते ज्ञात्वा चैव विचक्षणः।।

श्रोत्रं त्वक् च तथा ज्ञेयं नेत्रं जिह्वा तथैव च।
घ्राणं चैवात्र पञ्चैते स्मृत्वा चैव द्विजोत्तमाः।।

प्राणश्चैवाप्यपानश्च व्यानोदानस्ततः परम्।
समानः पञ्चधा स्मृत्वा विशेषेणैव बुद्धिमान्।।

कामः क्रोधश्च लोभश्च मोहश्चैव मदस्तथा।
मात्सर्यं भर्त्सनं चैव सप्तैते तद्यथाक्रमम्।।

शुक्लाच्च जायते कामः मज्जात् क्रोधश्च जायते।
अस्थ्नश्च जायते लोभो मेदसश्च मदस्तथा।।

मांसान्मोहश्च जायेत असृजश्च तु मत्सरः ।
पागिति सर्वा विज्ञेया पादहस्तः प्रकीर्तितः।।

पायुश्शब्दस्य इत्युक्त्वा उपस्थं गुह्यमुच्यते।
ऊरुश्चैव तु पार्ष्णि स्यात् पादपाण्यादिपञ्चकम्।।

लिङ्गयोगेन योनेश्च जायते शुक्लरेतसम्।
तयोश्शुक्लस्य वृद्धौ तु जायंते पुरुषाकृतिः।।

तयोश्शोणितवृद्धौ तु नारी सञ्जायते क्रमात्।
तयोर्यत्र समं तत्र जायते तु नपुंसकः।।

एवं क्रमेण सञ्जातं कृत्स्नं शास्त्रेण चोदितम्।

### ४.१२.१६ पञ्चमूर्त्तिविधानेनार्चनस्य श्रैष्ठ्यम्

**ज्ञा. ७७. १४४ , १४५**

एता मूर्तयः चतुर्युगाः चतुर्वगाः चतुर्वर्णाः चतुर्वेदाः चतुर्वर्णसमृद्धिप्रदा भवन्ति। आदिमूर्तेरेकस्यैव पञ्चभेदकल्पनं पञ्चमूर्तिविधानम्। अभिन्नसङ्कल्पने चैकमूर्तिविधानेपि पञ्चमूर्तिनामभिरेवार्चनं विहितं चातुर्वर्ण्यसमृद्ध्यर्थम्। तस्मात् पञ्चमूर्तिविधानेनार्चनं श्रेष्ठम्। यथैकस्याग्नेः कुण्डदिङ्नाममन्त्रक्रियाभेदैः पञ्चधैवाग्निहोत्राहुतिः श्रेष्ठम्। यथैकस्याग्नेः दिगगर्भालयमूर्तिनाममन्त्रक्रियाभेदैः पञ्चधार्चनमेतच्छान्तिकं पौष्टिकं

सर्वसुखकरं सर्वलोकप्रदमपत्यवर्धनं धनधान्यादिसर्वसम्पत्प्रदं ज्ञानादिक-वैदिककर्माभिबृंहणं ब्रह्मवर्चसकरम् आयुरारोग्यकरं च भवति।

**स. ३७ ७, ८ ; नि. १५ .**

### ४.१२.१७ पञ्चमूर्तयः

**प्र. १३ . ४**

विष्ण्वादीनां तु पञ्चानां स्थापनं पञ्चमूर्तिकम्।

### ४.१२.१८ पञ्चमूर्त्यादिध्रुवबेरालयनिर्माणे वास्तुविशेषाः

**स. ६२ १९ - २१**

सहस्राधिष्ठितग्रामे मध्यमे पञ्चमूर्तिकम्।
चतुर्मूर्तीस्तु वा कुर्याद् ग्रामवृद्धिकरं भवेत्।।

ग्रामादेः पश्चिमे कुर्याच्चतुर्मूर्तीस्तु वा तथा।
एकमूर्तिन्तु वा कुर्यान्नगरादौ तथैव च।।

प्रतिष्ठामर्चनादीनि पूर्ववद्विधिना चरेत्।

**ज्ञा. ७७ . १४५**

सहस्रविप्रावासग्राममध्ये पञ्चमूर्तिविधिना विष्णोरर्चनं न कारयेत्तद्वास्तु सर्वविनाशायैव भवति। सहस्रन्यूनेऽपि शताधिके च कुर्याच्चेत्तद्वास्तु सर्वसम्पन्नं भवति। एतच्छूद्रोऽनुलोमश्च नैव कारयेत्। सहस्रान्यूनग्राममध्ये चैकमूर्तिविधिना वाऽर्चयेदिति केचित्।

**अ. २ ; अ. ९ . ; खि. १८ . ५**

**य. २ . १३ - १५**

सहस्रादधिके ग्रामे ब्रह्मभागं विभज्य च।

चतुर्धा जवनांशे तु पञ्चमूर्तीस्समर्चयेत्।।

तदंशे पूजकगृहं दक्षिणे चोत्तरेऽथवा।
पश्चिमे वा विदिग्देशे कल्पयेत्तत्समीपतः।।

स्नपनं च तथैशान्यां गोष्ठागारं च पावके।
नैर्ऋत्यामापणस्थानं कारयेत्तान् यथाविधि।।

**स. २ . ३८, ३९ ; प्र. ३ . २५**

### ४.१२.१९ पञ्चमूर्त्तिध्रुवबेरस्थापने विमानविशेषाः

**स. ३७. ९ , १०**

नलीनके तथाष्टाङ्गे नन्द्यावर्ते चतुर्मुखे।
सर्वतोभद्रके वाथ श्रीप्रतिष्ठितके तथा।।

बृहद्वृत्तविमाने वा यजमानसमीप्सिते।
स्थापयेद्देवदेवं तु पञ्चमूर्त्तिविधानतः।।

**ज्ञा . ७७ . १४५ खि. १८ . ६ - ८**

### ४.१२.२० पञ्चमूर्तिविमानस्वरूपम्

**खि. २ . ५५ - ५७**

पञ्चमूर्तिं समुद्दिश्य विमानं परिकल्पयेत्।
द्वितलं त्रितलं वापि विमानं कारयेद् बुधः।।

एवं कर्तुमशक्तश्चेत् पश्चिमे वापि कारयेत्।
एकमूर्त्तिक्रमेणापि द्वितलोक्तविधानतः।।

आदिभूमिं घनं कुर्याद् द्वितलं चासनं भवेत्।

**स. ३७ . ११ - १७**

शिल्पशास्त्रोक्तमार्गेण विमानं परिकल्पयेत्।
आदौ भूखननं कुर्याद्विमानस्य तु मध्यमम्।।

प्राच्यां पुरुषमूर्तिस्तु सत्यमूर्तिस्तु दक्षिणे।
पश्चिमेऽच्युतमूर्तिः स्यादनिरुद्धस्तथोत्तरे।।

पुरुषादीनां चतुर्दिक्षु चतुर्गर्भगृहाणि च।
मध्ये तले द्वितीये तु विष्णोर्गर्भालयं भवेत्।।

तृतीये तु तले तत्र शयानस्य हरेर्भवेत्।
तलेऽथवा द्वितीये तु नारसिंहं प्रकल्पयेत्।।

तृतीये तु तले विष्णुमादिमूर्तिं प्रकल्पयेत्।
एवं तत्त्रितलैर्युक्तं कुर्यात्सोपानसंयुतम्।।

चतुर्दिङ्मुखसंयुक्तं षड्गर्भालयसंयुतम्।
मुखमण्डपसंयुक्तं चतुर्दिक्षु तथैव च।।

शिल्पशास्त्रविधानेन विमानं कारयेद् बुधः।

**स. २ . ३९ - ४१ ; ज्ञा. ७७. १४५ ; खि. १८ . ९ - १५**

### ४.१२.२१ वास्तुभेदेन विष्णवादिध्रुवबेराणामवस्थानभेदाः

**ज्ञा. ३६ . ६७**

पञ्चमूर्त्तिविधानेन ग्राममध्ये प्राच्यां वा स्थानकं शयानं वा, दक्षिण-पश्चिमयोरासीनं स्थानकं वा, उत्तरे शयानमासीनं वा आग्नेये स्थानकं, नैर्ऋते वाराहं, वायव्ये नरसिंहम्, ऐशान्ये हरिशङ्करम्, विजने योगासनं, नद्युद्यानसमुद्रपार्श्वे शयानं राष्ट्रान्तरे नदीसङ्गमे स्थानकं शयानं वा

अन्यत्र सुखासनमेव संस्थापयेत्।

**स. २. ३५ - ३७**

सहस्रविप्रसम्पूर्णे ग्रामे पश्चिमतो हरेः।
विमानं त्रितलं कुर्यादादिभूमिघनं तथा।।

मध्ये तले समासीनं देवीभ्यां स्थापयेद्धरिम्।
सहस्राधिकविप्रे तु तलयोरादिमध्ययोः।।

आद्ये चैव समासीनं मध्यमे शयितं हरिम्।
स्थितं वा श्रीमहीयुक्तमूर्ध्वे तु स्थापयेद्धरिम्।।

## ४.१२.२२ त्रितलविमाने विष्ण्वादिध्रुवबेराणामवस्थानभेदाः

**नि. १५**

स्थानं मया पुरैवोक्तं तत्तत्स्थाने प्रकल्पयेत्।
स्थानकं वासनं वाथ विष्ण्वादि क्रमशः सुधीः।।

त्रितले निष्कलं ध्यानेनैव विशेषतः।
त्रितलं विमानं चेत् आदिभूमिघनं भवेत्।।

मध्ये तले तु मध्ये तु चासनं कारयेद् बुधः।
ऊर्ध्वे तले तृतीये तु नारसिंहं प्रकल्पयेत्।।

शयितं देवमथवा भोगमार्गविधानतः।
पूर्वोक्तेन विधानेन स्थापयित्वा समर्चयेत्।।

## ४.१२.२३ भगवतः पञ्चमूर्तिस्वरूपम्

**ज्ञा. ७७ . १४४**

विष्णुः पुरुषः सत्योऽच्युतोऽनिरुद्ध इति पञ्चमूर्तयः। तेषामादिः परमो

विष्णुः युक्तो धर्मं ज्ञानमैश्वर्यं वैराग्यम् इति चतुर्भिर्गुणैः । तस्मादादिमूर्तेरेव भिन्नाः पुरुषाद्याः चतस्रो मूर्तयः। धर्मेण गुणेन भिन्नः पुरुषमूर्तिः। ज्ञानेन सत्यमूर्त्तिः। ऐश्वर्येण अच्युतमूर्तिः। वैराग्येण अनिरुद्धमूर्तिः।

**स. ३७ . १ - ६ ; नि. १५**

### ४.१२.२४ पञ्चमूर्त्तिप्रतिष्ठायाम् आदिमूर्त्यादिध्रुवबेराणां मानम्

**खि. १८. ४९ - ५२**

आदिमूर्त्यादिमूर्तीनां बिम्बान्यत्रोक्तवच्चरेत्।
देव्योर्बिम्बानि चान्येषां नवतालेन कारयेत्।।

आयामं च परीणाहमन्तरं हस्तपादयोः।
पादप्रसारभेदांश्च दृष्टिभेदं विशेषतः।।

शिष्टं त्वाष्ट्रप्रयोगं च शिल्पशास्त्रोक्तवच्चरेत्।
शिल्पविद्यासु निपुणैः सिद्धहस्तैः यतात्मभिः।।

ऊहापोहविधिज्ञैश्च शिल्पिभिः कारयेद् गुरुः।
एवं परिवृताः मूर्तीः द्वारपालांश्च कारयेत्।।

**क्रि. ३० . ११**

पञ्चमूर्तिप्रतिष्ठायां पुरुषादिप्रकल्पने।
एतदेव प्रमाणं स्यात् अधिकं न समाचरेत्।।

### ४.१२.२५ पञ्चमूर्तिप्रतिष्ठायां विष्णवादिध्रुवबेराणां स्थापनस्थानम्

**खि. २ . १११ - ११४**

पञ्चमूर्तिप्रतिष्ठा चेत् गर्भागारे पदं चरेत्।
ऊर्ध्वं तलं समुद्दिश्य मानुषे स्थापयेत्क्रमात्।।

ब्राह्मे तु विष्णुमूर्तिं च स्थापयित्वा विचक्षणः।
अर्धमण्डपमध्ये तु पुरुषमूर्तिं समर्चयेत्।।

सत्यं दक्षिणतः पार्श्वे पश्चिमेऽप्यच्युतं तथा।
उत्तरे चानिरुद्धं च स्थापयित्वा समर्चयेत्।।

परितः प्रावरणं कुर्याद्यथायोगं विचक्षणः।
स्थापयित्वा विधानेन नित्यं विधिवदर्चयेत्।।

### ४.१२.२६ सपरिवारपुरुषमूर्तिकल्पनम्

**स. ३७ . १८ - २१**

प्राच्यां पुरुषमूर्तिं च श्वेताभं च यथाविधि।
तस्य दक्षिणतो देवीं श्रियं रक्तां सुलोचनाम्।।

वामे च हरिणीं देवीं श्यामवर्णां च कारयेत्।
प्रवालाभं भृगुं तद्वत् पुराणं चार्चकं सितम्।।

व्याजिनीं च सुरां रक्तां सुन्दरीं कनकप्रभाम्।
श्वेतं शङ्खनिधिं कुर्याद्दक्षिणे द्वारपालकम्।।

तथा पद्मनिधिं चापि रक्ताभं वामभागतः।
सावित्रीं चैव गायत्रीं कल्पयेद् भित्तिपार्श्वयोः।।

**खि. १८ . ५५ - ५७ ; ६१ -६४**

[ अत्र शङ्खनिधिविषये दण्डहस्तसमन्वितम् इति, पद्मनिधिविषये रूक्षमुखान्वितम् इति च अधिकम्। ]

**ज्ञा. ३४ . ६४**

पुरुषं स्फटिकाभं रक्तास्यनेत्रपाणिपादनखवस्त्रयुतं चतुर्भुजं शङ्खचक्रधरं

देवीभ्यामृषिभ्यां जयभद्राभ्यां याजकाभ्यां संयुक्तम्।

**ज्ञा. ७७ . १४५**

देवानासीनान् स्थितान् वा कारयेत्। प्राच्यां सितवर्णं पुरुषं रक्तनेत्रास्यपाणिपादं दक्षिणवामयोः देव्यौ सुवर्णाभां श्रियं, रक्ताभां मेदिनीं च वीजयन्तीं सुरां रक्तां सुन्दरीं कनकाभामर्चकं भृगुं प्रवालाभं मार्कण्डेयं श्वेताभं च कृत्वा भित्तौ दक्षिणवामयोः, यथोक्तवर्णां सावित्रीं गायत्रीं स्वयम्भुवं रुद्रमपि प्रागादि नैर्ऋत्यन्तं सौपर्णाद्यांश्च पश्चिमादीशानान्तं विघ्नं निधिपतिं शङ्खं पद्मं च विलिखेत्।

## ४.१२.२७ सपरिवारसत्यमूर्तिकल्पनम्

**स. ३७ . २२ - २५**

दक्षिणे त्वञ्जनाभं च सत्यं वै दक्षिणामुखम्।
तस्य दक्षिणतो देवीं पवित्रीं रक्तसन्निभाम्।।

पौष्णीं श्यामां तथा देवीं कारयेद्वामतः क्रमात्।
धातृनाथं सुवर्णाभं श्यामं तद्वच्चिरायुषम्।।

व्याजिनीं च जयां श्यामां रक्तां भद्रां च कारयेत्।
द्वारस्य दक्षिणे शङ्खं शङ्खाभं शङ्खचूलिनम्।।

वामभागे च चक्रं च रक्ताभं चक्रचूलिनम्।

**खि. १८ . ३५ - ३८ , ५७ - ५९**

सत्यं दक्षिणतः कुर्याद् भिन्नाञ्जनचयप्रभम्।।

धृतिपौष्णी तथा देव्यौ सर्वाभरणभूषिते।
धृतिस्स्याद्रक्तवर्णा च श्यामा पौष्णी प्रकीर्तिता।।

सत्यस्य पृष्ठभागे तु जयाभद्रे च कारयेत्।
जया श्यामा भवेत् भद्रा रक्तवर्णा प्रकीर्तिता।।

धातृनाथश्चिरायुश्च पूजकौ सत्यपार्श्वतः।
कनकाभो धातृनाथश्चिरायुः पीत उच्यते।।
सत्यमूर्तिं समुद्दिश्य द्वारपालौ प्रकल्पयेत्।
द्वारस्य पश्चिमे भागे शङ्खचूडं च कारयेत्।।

द्वारस्य पूर्वभागे तु चक्रचूडं च कारयेत्।
श्वेताभं शङ्खचूडं च रक्ताभं चक्रचूडिनम्।।

इत्येवं सत्यमुद्दिश्य द्वारपालौ प्रकल्पयेत्।

**ज्ञा. ७७ . १४५**

दक्षिणस्यामञ्जनाभं सत्यमूर्तिं देवीं धृतिं रक्ताभां पौष्णीं श्यामाभां चैव द्वे व्याजिन्यौ जयां श्यामां भद्रां रक्तां मुनिं धातृनाथं कनकाभं चिरायुषं श्यामं कृत्वा विरिञ्चिं गुहं सिद्धान् ज्ञानरूपान् दक्षिणे सोमं रुद्रं वह्निं धर्मं च वामे विलिखेत्।

**ज्ञा. ३४ . ६४**

दक्षिणे अञ्जनाभं पिङ्गाम्बरं धृतिपौष्णीभ्यां युतं सुरसुन्दरीभ्यां वीज्यमानं सत्यम्।

## ४.१२.२८ सपरिवाराच्युतमूर्तिकल्पनम्

**स. ३७ . २५ - २८**

पश्चिमे च सुवर्णाभम् अच्युतं पश्चिमामुखम्।।
तस्य दक्षिणतो देवीं पवित्रीं रुक्मसन्निभाम्।

वामे क्षोणीं च शुक्लाभां श्यामां वै पूरकारिणीम्।।

श्वेतं पुण्यं मुनिं चैव व्याजिनीं विजयां तथा।
रक्तां विन्दां तथा श्यामां पूजनीं कारयेद् बुधः।।

तत्र शङ्खनिधिं कुर्यात् पूर्ववद् द्वारदक्षिणे।
तथा पद्मनिधिं वामे द्वारपालं च कारयेत्।।

**खि. १८ . ६०, ६१**

[ अत्र शङ्खनिधेः पद्मनिधेश्च स्थानकल्पने क्रमो विपरीतो दृश्यते। ]

**ज्ञा. ३४ . ६४**

पश्चिमे अच्युतं सुवर्णाभं शुकपिच्छाम्बरधरं पवित्रीक्षोणीयुतं गुहतुष्टिभ्यां याजकाभ्याम्।

**ज्ञा. ७७ . १४५ , १४६**

पश्चिमे कनकाभमच्युतं देवीं पवित्रीं कनकाभां क्षोणीं शुक्लामर्चकं ख्यातीशं प्रवालाभं पुराणं रक्तं वीजयन्तीं विजयां रक्तां विन्दां श्यामां कृत्वा नरनारायणौ दक्षिणे कामं रतिं वामे क्षमां लिखेत्।

**खि. १८ . ३९ - ४१, ६१ , ६२**

[ अत्र अच्युतविषये चतुर्भुजम् इति अधिकम्, शङ्खचूडकल्पनं चक्रचूडकल्पनं च अधिकम्।]

## ४.१२.२९ सपरिवारानिरुद्धमूर्तिकल्पनम्

**स. ३७ . २९ - ३३**

उत्तरे तु प्रवालाग्निसन्निभं चानिरुद्धकम्।
अनन्तोत्सङ्ग आसीनं वीरासनविधानतः।।

उत्तराभिमुखं नागफणैः सञ्छन्नमौलिनम्।
कारयेत्तदनन्तस्य फणाः सप्ताथ पञ्च वा।।

प्रमोदाधायिनीं देवीं प्रवालाभां च दक्षिणे।
श्यामां वामे महीं देवीं भृगुं कनकसन्निभम्।।

श्वेताभमसितं चापि व्याजिनीं च कुमुद्वतीम्।
तथैवोत्पलकं चैव कारयेत विधानतः।।

पूर्ववच्छङ्खचूलिं च चक्रचूलिं यथाक्रमम्।
द्वारस्य दक्षिणे वामे द्वारपालानिमानपि।।

**खि. १८ . ४२ - ४५**

**ज्ञा. ३४ . ६४**

उत्तरे अनिरुद्धं तरुणादित्यसङ्काशं श्यामाम्बरमनन्ताध्यासीनं फणैः सप्तभिः पञ्चभिर्वा आच्छादितमौलिं कुञ्चिताननं विवृत्तैकपादं वामजानु-प्रतिष्ठितोत्तम्भितसव्यकरमनन्तालम्बितान्यं महीप्रमोदाधायिनीभ्यां वराह-नारसिंहाभ्यां स्वाहास्वधाभ्यां व्याजकाभ्यां समन्वितमेवं च क्रमेण संस्थाप्य।

**ज्ञा. ७७ . १४६**

उत्तरे प्रवालाभमनिरुद्धं अनन्तोत्सङ्ग आसीनं वीरासनेनानन्तं तस्य सहस्रफणान् कर्तुमशक्यं, द्वादश-सप्त-पञ्च वा फणान् कृत्वा देवीं प्रमोदधायिनीं प्रवालाभां महीमिन्दीवराभामर्चकं भृगुं दक्षिणे रौहिणेयं सिताभं नारसिंहं वन्दमानमेकजानुनासीनं वामे वराहरूपं च लिखेत्।

### ४.१२.३० सपरिवारविष्णुमूर्तिकल्पनम्

**स. ३७ . ३४ - ४७**

मध्ये तले द्वितीये तु तथा सिंहासनोपरि।

श्रीभूमिभ्यां सुखासीनं श्यामवर्णं चतुर्भुजम्।।

शङ्खचक्रधरं चैव सर्वाभरणभूषितम्।
कारयित्वा विधानेन पूजनीं श्यामसन्निभाम्।।

मायां रक्तनिभामेव तथा संह्लादिनीमपि।
मार्कण्डेयं भृगुं चैव पूर्ववत्कारयेद् बुधः।।

बलिदं द्वारपालं च श्यामवर्णं गदायुधम्।
उद्देश्यकरमुद्रं च दक्षिणे नागचूलिनम्।।

तुहणं च तथा वामे रुक्माभं दण्डपाणिनम्।
उद्देश्यकरसंयुक्तं कारयेद् द्वारपालकम्।।

सर्वेषां द्वारपालानां तत्तद् द्वारे यथाक्रमम्।
भित्याश्रयं च तद् बिम्बमाभासं वाथ कारयेत्।।

ऊर्ध्वे तले तृतीये तु पूर्वोक्तेन विधानतः।
अनन्तशयने देवं शयानं सम्प्रकल्पयेत्।।

तलेऽथवा द्वितीये तु तथा सिंहासनोर्ध्वतः।
श्रीभूमिभ्यां सहासीनं शान्तवेषसमन्वितम्।।

सिंहवच्च मुखं कुर्याद्दंष्ट्रैरपि नखैर्युतम्।
श्वेतांभं रक्तवस्त्रं च शङ्खचक्रधरं परम्।।

दक्षिणे तु श्रियं वामे क्षोणीमपि च पूर्ववत्।
सिंहासनस्य चाधस्तादाग्नेय्यां देवपार्श्वतः।।

ब्रह्माणं च प्रवालाभं देवमुद्वीक्ष्य सुस्थितम्।

उपसंहर कोपं त्वमिति तत्र सुनादिनम्।।
शङ्करं च तथैशान्ये तिष्ठन्तं श्वेतसन्निभम्।
देवमुद्वीक्ष्य वन्दन्तं कारयेत यथाक्रमम्।।

भृगुं प्रवालवर्णं च पुराणं रक्तमेव च ।
द्वितीये तु तले कृत्वा तृतीये तु तले पुनः।।

आदिमूर्तिं तथा विष्णुं पूर्ववत्सम्प्रकल्पयेत्।

**ज्ञा. ७७ . १४६**

[ अत्र प्रह्लादं गरुडं बृहद्वादकम् इति अधिकम्। ]

**खि. १८ . १३ - २४ , ४६ - ४८ , ५३ , ५४**

**ज्ञा. ३४ . ६४**

उपरि विष्णुं श्यामलाङ्गं चतुर्भुजं शङ्खचक्रधरं सर्वाभरणसंयुतं श्रीहरिणीभ्यां प्रसारितान्यहस्ताभ्यां च भृगुपुराणाभ्यां प्रवालरजतवर्णाभ्यां श्वेतवस्त्रधराभ्यां किष्किन्धसुन्दराभ्यां व्याजकाभ्याम्।

### ४.१२.३१ सपरिवारादिमूर्तिकल्पनम्

**खि. १८ . २५ - ३०**

-----------------तृतीये तु प्रवक्ष्यते।।

सुखासीनं प्रकुर्वीत श्रीभूमिभ्यां समायुतम्।
मुनिभ्यामपि संयुक्तं तत्तद्वर्णसमायुतम्।।

अन्यानपि क्रमेणैव देवान् सम्यक् प्रकल्पयेत्।
अथवा शयनं कुर्यादनन्तोपरिशायिनः।।

तस्यैव पादपार्श्वे तु श्रीदेवीं सम्यगर्चयेत्।

पादसंवाहनपरां देवदेवं समीक्ष्य वै।।

नाभ्यम्बुजसमाविष्टं ब्रह्माणं च प्रकल्पयेत्।
पञ्चायुधानि गरुडं तत्तत् स्थाने प्रकल्पयेत्।।

देवस्य पादपार्श्वे तु कल्पयेन्मधुकैटभौ।
पूजकौ च मुनी द्वौ तु द्वारपालौ प्रकल्पयेत्।।

**स. ३७ ४०, ४६, ४७ ; ज्ञा. ७७ . १४६**

**ज्ञा. ३४ . ६४**

तदूर्ध्वे अनन्तभोगशयनं स्थापयेत्। चतुर्मूर्तिविधानेनोपरि नारसिंहं वाराहं वा स्थापयेत्।

## ४.१२.३२ विष्णुमूर्तिप्रतिष्ठायां नृसिंहध्रुवबेरस्य मानम्

**खि. १८. १९ - २१**

नारसिंहं तथा कुर्याद्दशतालेन मानतः।।

आयामं सर्वतः कुर्यादुपन्यासोक्तमार्गतः।
परिणाहे तु सर्वत्र मानं ज्ञात्वा तु बुद्धिमान्।।

अध्यर्धं योजयित्वा तु कारयेत्तु विचक्षणः।

## ४.१२.३३ द्वितलविमाने पञ्चमूर्तिप्रतिष्ठाक्रमः

**वि. ३५. २४५ - २४८**

पञ्चमूर्तिप्रतिष्ठा चेत् - विमानं द्वितलं कृत्वा, ऊर्ध्वतले विष्णुमादिमूर्तिम्, अधस्तले पुरुषादीन् पूर्ववत् स्थापयेत्।अथवा, द्वितीयतले विष्णुं पूर्ववत् संस्थाप्याधस्तले अभ्यन्तरं घनसंयुक्तं तत्परितः सालीन्द्रं चतुर्दिक्षु चतुर्द्वारयुतं प्रधानं मुखमण्टपं संयुक्तं कृत्वा, अलीन्द्रे प्राङ्मुखादीन् पुरुषादीन् देवीभ्यां

सहितं रहितं वा स्थापयित्वार्चयेत्। एवं यथोक्तविधिना सर्वाणि ध्रुवबेराणि कर्तुमशक्तश्चेत् उक्तविमानेष्वेकस्मिन् विमाने चैकतलप्रासादं नवहस्तादहीनं निश्चित्य तस्मिन्नेकाशीतिविभागं कृत्वा तन्मध्ये नवभागं गर्भागारं तत्परितः षोडशभागमभ्यन्तरं तत्परितश्चतुर्विंशतिभागमलिन्द्रं तद्बाह्ये द्वात्रिंशद्भागं बाह्यकुड्यम् अथवा तदेकविंशतिशतभागं विभज्य षट्पञ्चाशद्भागम् अलिन्द्रं चत्वारिंशद्भागं बाह्यकुड्यं कारयेदित्येके।तत्समं त्रिपादमर्धं वा, मुखमण्टपं दक्षिणपश्चिमोत्तरं मूर्तीनां द्वारदेशे जालकैर्युक्तं बाह्यं भित्तिविस्तारसमम् अभ्यन्तरभित्तिविस्तारं सप्तदशोत्सेधमर्धाधिकं, पादोन द्विगुणं, द्विगुणं वा, विमानोत्सेधं तदष्टभागं कृत्वा, एकांशमधिष्ठानं, तद्विगुणं स्तम्भायाममेकांशं प्रस्तरं, बाह्यभित्तौ संयोज्य अभ्यन्तर-भित्तेरुपरिकण्ठमेकांशं, द्व्यंशं शिखरम्, एकांशा पिण्डि (स्थूपि) केत्येवमेकतलप्रासादं परिकल्प्य, तस्मिन् गर्भालये दैविके भागे विष्णुमादिमूर्तिं भोगासनमार्गेण ध्रुवबेरं प्रतिष्ठाप्य, पुरुषादिमूर्तीनामादिमूर्त्तेर्भिन्नत्वात् ध्रुवबेरं विना आदिमूर्त्तेरनुरूपं विष्ण्वादीनि सर्वाणि कौतुकबेराणि विधिना कारयित्वा, गर्भागारे ब्रह्मपदे विष्णुमादिमूर्तिम्, अलिन्द्रे द्वारदक्षिणे प्राङ्मुखं पुरुषं, दक्षिणे सत्यं, पश्चिमे अच्युतं, उत्तरे अनिरुद्धं, द्वारस्योत्तरपार्श्वे शयानं, दक्षिणे सत्यस्य पश्चिमे नरनारायणौ, पश्चिमे अच्युतस्योत्तरे नृसिंहम्, उत्तरे अनिरुद्धस्य पश्चिमे वाराहं स्थापयेत्।

अथवा तत्तद्भित्तावाभासं ध्रुवं सङ्कल्प्य, ध्रुवकौतुकसंयुक्तं कारयेदिति केचित्। अथवा पुरुषादीनामभ्यन्तरभित्तौ गुहासु रत्नन्यासं कृत्वा कौतुकानेव स्थापयित्वा अर्चयेत्। सर्वेषामंशानां (कौतुकानां) आवाहनं विसर्जनं च आदिमूर्त्तावेव नित्यहोमबलिदानबल्युद्धरणस्नपनोत्सवादीन्यादिमूर्त्ते (रे) रिव कारयेत्। अन्यत्सर्वं समानं पुरुषादीनामेव तौ विना तत्रार्चनमेव

कारयेदित्येके।

अथवा द्वितलप्रासादमेवं कल्पयेत्। विमानोत्सेधं चतुर्दशभागं कृत्वा, सार्धांशमधिष्ठानं, तत् द्विगुणं स्तम्भायामं, सार्धांशं प्रस्तरं बाह्यभित्तौ संयुज्य, अलीन्द्रं विसृज्य अभ्यन्तरं भित्तेरुपर्यूर्ध्वभूमेः पादं द्व्यर्धांशं, प्रस्तरमेकांशं, सपादांशं कण्ठं, सपादद्व्यंशं शिखरम्, एकांशं स्थूपितुङ्गं, बाह्यभित्तेरुपरि कूटशालाद्यैरुपशोभितं मुखमण्टपचर्यासोपानादिभिर्युक्तं शिल्पिशास्त्रोक्तमार्गेण युक्त्या कृत्वा, अधस्तले विष्णुं पूर्ववत्, ध्रुवकौतुकं संस्थाप्य, पुरुषादीन् पूर्ववत् स्थापयेत्। ऊर्ध्वतले शयानधुवकौतुकसंयुक्तं, कौतुकमेव वा, मानुषपदे पीठे रत्नानि विन्यस्य, संस्थाप्य, नृसिंहं द्वारस्योत्तरे पार्श्वे अलीन्द्रं स्थापयेदिति विशेषः।अथवा कूटाकारमनर्पितं चतुर्वर्गयुक्तं सङ्कल्प्य, बाह्यभित्तिसमाभ्यन्तरभित्तौ सप्तदशोत्सेधं षडंशं कृत्वा, एकांशमधिष्ठानं, द्व्यर्धंशं स्थम्भतुङ्गं, द्व्यंशं शिखरम्, अर्धंशं स्थूपितुङ्गमिति एवं शिलयेष्टकया वा भित्तिं सङ्कल्प्य, लुपाविधानेन कृत्वा, लोहैर्लेष्टैर्वाऽऽच्छाद्य, उपरिस्थूपिकां (एकां) तिस्रः पञ्च, सप्त, नव वा कारयेत्। मुखमण्टपे नासार्धं वेति केचित्। ध्रुवबेरं विना विष्ण्वादिसर्वमूर्तीनां कौतुकानेव पूर्ववत्प्रतिष्ठापयेत्। उपरि तालार्धं विष्णुमूर्त्तेः प्राच्यामुन्नतं पीठं कृत्वा, तस्मिन् भित्तौ, गुहायां वा, देवं कौतुकमेव संस्थाप्य, नृसिंहं द्वारवामे अलीन्द्रे स्थापयित्वाऽर्चयेत्। षट्पञ्च-मूर्त्तिभ्योऽधिकमूर्त्तीर्विनैवं कुर्यात्। शक्तश्चेत्पुनर्बालागारं कृत्वा, कूटकागारे तस्मिन् प्रतिष्ठाप्य, अभ्यर्च्य, नलिनकादिषु पूर्ववद्यथोक्तं विमानं ध्रुवबेराणि च कृत्वा, बालागारे अर्चितान् कौतुकादीन् समानीय तस्मिन् विमाने प्रतिष्ठाप्यार्चयेत्। अथवा प्रथमं तरुणालयस्थाने कूटाकारं कारयेदिति केचित्। क्षुद्रविमाने ध्रुवयुक्तं स्थापितं चेत्तस्मिन् महाविमानं कर्तुमिच्छेच्चेत्

अन्यत्र विस्तीर्णदेशे यथोक्तं विमानं ध्रुवबेराणि च कृत्वा, पूर्वविमानस्थान् कौतुकादीन् समानीय, तस्मिन् विमाने प्रतिष्ठाप्य, अर्चयेत्। पुनरपि पूर्वविमाने ध्रुवानुरूपं कौतुकं यथालाभमानेन कृत्वा, संस्थाप्य, अलाभे सुवर्णं, कूर्चं वा, निक्षिप्य, यथालाभमर्चयेत्। आदिमूर्त्यादीनां बल्युत्सवस्नपनादीनि सर्वाणि विष्णोरादिमूर्तेरिव समाचरेदित्याह मरीचिः।।

**वा. ५**

विमानं द्वितलं कुर्यात् तले मूले विशेषतः।
विष्ण्वादिपञ्चमूर्तीस्तु स्थापयेद्देशिकोत्तमः।।

तलस्योर्ध्वे विशेषेण यज्ञमूर्तिं प्रतिष्ठितम्।
चतुर्भुजं चतुर्हस्तं दक्षिणाधः करादिषु।।

कटकं स्रुक् स्रुवं चैव वरदं सुस्थितं भवेत्।
अन्यत्तद्विपरीतं वा कारयेदिति केचन।।

निषण्णशयने तत्र कारयेदथवा बुधः।
सयज्ञं यज्ञपुरुषं यज्ञनारायणं परम्।।

परमानन्दरूपं तु पञ्चधा परिकल्पयेत्।
पञ्चलोकेषु पञ्चाग्निं प्रञ्चधाग्निरिति श्रुतिः।।

तस्मात्सर्वप्रयत्नेन स्थापयित्वा समर्चयेत्।
यज्ञमूर्तिस्तु पञ्चैते रसव्यूहक्रमं बुधः।।

पाकयज्ञफलं लब्ध्वा हविर्यज्ञफलं तथा।।
सोमयज्ञफलावाप्तिः ----------- ।

### ४.१२.३४ पञ्चमूर्तीनां द्वारपाललक्षणम्

**खि. १८ ६३ - ६५**

यथायोगं प्रकुर्वीत प्रतिद्वारं तु पालकौ।।

किञ्चिद् द्वारं समीक्ष्यैव किञ्चिद्रूक्षमुखान्वितौ।
उद्देशकरसंयुक्तौ दण्डहस्तसमन्वितौ।।

बिम्बं भित्त्याश्रितं कुर्यादुत्तमं परिचक्षते।
आलेख्यं वापि कर्त्तव्यं शक्त्या वै द्वारपालयोः।।

### ४.१२.३५ पञ्चमूर्तिपरिवार्चनस्यावश्यकता

**ज्ञा. ३४ . ६४**

सर्वत्रानपायिगणैः सार्धमाचरेत्। देवीहीने पत्न्यपत्यहानिः मुनिहीने धर्मनाशः विष्वक्सेनहीने कुलोत्सादनं वीशहीने रिपुवृद्धिः चक्रहीने संसारचक्रं शङ्खहीने मौढ्यं ध्वजहीने कार्पण्यं यूथेशहीने भृत्यहानिर्भवति। तस्मादेतैः द्वारागारपालकैरर्चयेत्।

### ४.१२.३६ पञ्चमूर्तिपरिवाराः

**ज्ञा. ७७ . १४६**

एतद्विमानं त्रिभिः पञ्चभिः सप्तभिर्वा प्राकारैः युक्तं कृत्वा परिवारदेवांश्च कारयेत्। प्रथमावरणे वैनतेयं पश्चिमोन्मुखं देवमुद्वीक्ष्य स्वस्तिकासनेनासीनं स्थितं वा ईशानरविशक्राग्नीन् प्रत्यङ्मुखान् गुहदुर्गायमानुदङ्मुखान् निर्ऋतिबुधवरुणवायून् प्राङ्मुखान् ब्रह्मकुबेरविष्वक्सेनान् दक्षिणमुखान् द्वाराद् ब्राह्ये दक्षिणतो विघ्नमुत्तराभिमुखं वामतः शेषं दक्षिणाभिमुखं च द्वितीयावरणेऽभिमुखे चक्रं गोपुराद् बाह्ये तथा ध्वजं शङ्खं च रक्षागारात् पुरस्तात् भूतपीठं दक्षिणपश्चिमयोरुद्यानमुत्तरस्यामर्चकानामावासं चाचार्यगृहं

विष्वक्सेनसूत्रेण कारयेत्।

**स. ३७ . ५८ - ६२**

## ४.१२.३७ चतुर्मूर्तिप्रतिष्ठायां पुरुषादिध्रुवबेराणां व्यवस्था

**स. ६२ . १३ - १६**

अतः परं प्रवक्ष्यामि चतुर्मूर्तिविधिक्रमम्।।

विष्णुमूर्तिं विना मूर्तीश्चतुर्मूर्तीस्तु कारयेत्।
पूर्वोक्ते च विमाने वै यथोक्ततलसंयुते।।

आदिभूमिस्तु सैन्यस्य मध्ये वै नरसिंहकम्।
अधः प्रागादि परितः पुरुषाद्यास्तु पूर्ववत्।।

आसीनास्सुस्थिता वापि चतुर्मूर्तीश्च कारयेत्।

**वा. २४.**

अतः परमिदं वक्ष्ये चतुर्मूर्तिविधिक्रमम्।
ग्रामादेश्च प्रकर्तव्यं भूपरीक्षादि चोक्तवत्।।

मध्ये चैवाधिभूमिन्तु घनं चैव दृढीकृतम्।
त्रितलं च द्वितलं च तलमेकमथापि वा।।

पूर्वे दक्षिणवारुण्यां उत्तरान्ते यथाक्रमम्।
गर्भालयादीन् प्रत्येकं द्वारमण्टपकैर्युतम्।।

प्राच्यां च पुरुषं स्थाप्य श्वेतवर्णं चतुर्भुजम्।
दक्षिणे सत्यमूर्तिं च पीतवर्णं चतुर्भुजम्।

तथैव पश्चिमे कुर्यात् कृष्णवर्णमथाच्युतम्।

चतुर्भुजसमायुक्तं स्थापयित्वा विचक्षणः।।

रक्तवर्णेऽनिरुद्धं च अनन्तोत्सङ्गमाचरेत्।
चतुर्भुजयुतं तत्र स्थापयित्वा परं क्रमात्।।

शङ्खं चक्रं च कटकाभयदं वरदं तथा।।
अथवा वामहस्तेन वरदं कट्यवलम्बितम्।।

केचित् कौमोदकीं पद्मं धृत्वा चैवात्र कल्पयेत्।
अथवा वासुदेवादीन् पूर्वाद्यादीन् यथाक्रमम्।।

स्थापयित्वोक्तमार्गेण काश्यपोक्तवदाचरेत् ।
पद्मं पुरुषमूर्तिं तु सचक्रं सत्यमुच्यते।।

शङ्खं चैवाच्युतं चैव गदां चैवानिरुद्धकम्।
पुरुषाद्यनिरुद्धान्तं क्रमाच्चैवात्र ज्ञायते।।

सृष्टिं स्थितिं च मूर्तिं च संहारार्थं चतुष्टयम्।
विष्णोर्विकाररूपाणि पुरुषादीनि ज्ञायते।।

प्रत्येकमुत्सवाद्यादीन् कारयेद्देशिकोत्तमः।
स्थितं वा चासनं कल्प्यं नाचरेत् शयनं बुधः।।

स्थपानं लक्षणं चैव नित्यपूजाक्रमं तथा।।
नैमित्तिकानि कर्माणि पूर्वमेव प्रचोदितम्।।

पूर्वतन्त्रोक्तवत् सर्वं कृत्वा चैव विचक्षणः।
एवं यः कुरुते भक्त्या ऐहिकामुष्मिकं लभेत्।।

एवं सङ्कुचितेनोक्तं ग्रन्थगौरवभीरुणा।।

**ज्ञा. ७७. १४६**

### ४.१२.३८ त्रिमूर्तिप्रतिष्ठायां ध्रुवबेरव्यवस्था

**ज्ञा. ७७. १४६, १४७**

अनिरुद्धं विना पुरुषाद्याः त्रिमूर्तयः।

### ४.१२.३९ द्विमूर्तिप्रतिष्ठायां ध्रुवबेरव्यवस्था

**ज्ञा. ७७. १४७**

प्रथमे [1]नैव संस्थाप्ये। पृथगनिरुद्धं स्थापयेत्।

### ४.१२.४० एकमूर्तिविमाने ध्रुवबेरव्यवस्था

**स. ३७. ५७, ५८**

एकमूर्तिविमानं चेत् कूटागारेऽपि पूर्ववत्।।

ध्रुवं कौतुकसंयुक्तं स्थापयेदिति केचन।

### ४.१२.४१ एकमूर्त्यर्चने वास्तुविशेषः

**य. २. १६, १७**

सहस्रविप्रन्यूनेषु ग्रामेष्वपि च मध्यमे।
शतं शतद्वयाद्येषु चैकमूर्त्तिमथार्चयेत्।।

आसनं स्थानकं वाथ शयनं भोगमेव च।
कल्पयेद् ग्रामवृद्ध्यर्थं रामकृष्णौ तु वा पुनः।।

**स. २. ४१, ४२**

1 पुरुषसत्याख्ये प्रथमे मूर्ती वर्जयित्वा अच्युतानिरुद्धाख्ये स्थाप्ये इत्युक्तं स्यात्।

## ४.१२.४२ एकतलविमाने ध्रुवबेरावस्थानम्

**अ. २**

कन्यसं स्थालमेकं(?) तु यानकं वा सुखासनम्।
सर्वतः शयनं श्रेष्ठं विष्णोरालयमुत्तमम्।।

## ४.१२.४३ सप्ततलविमाने ध्रुवबेरावस्थानम्

**नि. ९.**

अत्युत्तमं मनुष्याणां सप्तभूमिर्विधीयते ।।
आदौ भूमिघनं कुर्यात् द्वितीयं स्थानकं भवेत्।

तृतीये निष्कलं कुर्यात् चतुर्थे तु सुखासनम्।
पञ्चमे निष्कलं स्थानं षष्ठे चैवं तु सप्तमे।।

शयनं निष्कलं कुर्यात् सप्तभूमौ प्रशस्यते।
अथवा कारयेद्विद्वान् तलमन्यं तु पूर्ववत्।।

तृतीये तु तुरीये तु स्थानकादिक्रमं चरेत्।
पञ्चमे च तथा षष्ठे वाराहं नारसिंहकम्।।

प्रतिलोमक्रमं वापि वोपरिष्टात्तु निष्फलम्।
वि ------ द्यात्वा स्थापयेत्तत्र वै बुधः।।

**स. ६२. १६ - १८**

पञ्चमूर्तिर्यदि भवेदूर्ध्वे वाराह उच्यते।।

तृतीये नरसिंहस्तु चतुर्थे शयनं भवेत्।
पञ्चमे चासनं प्रोक्तं वाराहादेस्तथासनम्।।

पुरुषाद्याश्चतुर्दिक्षु तथासीनाः स्थितास्तु वा।
कर्तुं सप्ततलादूर्ध्वं विमानं न हि शक्यते।।

### ४.१२.४४ पञ्चतलविमाने ध्रुवबेरकल्पनाक्रमः

**नि. ९.**

उत्कृष्टं तु मनुष्याणां पञ्चभूमिर्विधीयते।
पञ्चभूमिविमानेऽस्मिन् देवताकल्पनाक्रमम्।।

अधस्तलं घनं विद्यात् तदूर्ध्वे स्थानकं भवेत्।
स्थानकोक्तविधानेन सर्वान् देवान् समाचरेत्।।

तदूर्ध्वे तु सुखासीनं तस्योर्ध्वे शयनं क्रमात्।
तदूर्ध्वे निष्कलं प्रोक्तम् एवं पञ्चतलक्रमः।।

### ४.१२.४५ चतुस्तलविमाने ध्रुवबेरावस्थानम्

**नि. ९.**

चतुस्तलविमानेपि आदिभूमिं च पूर्ववत्।
अथवा सुखासीनं चैव तदूर्ध्वे शयनं तथा।।

तथापि च तदूर्ध्वे च स्थानकं चैव निष्कलम्।

### ४.१२.४६ त्रितलविमानाकारः

**वि. ३८ . २६२**

अथैकविमाने स्थानकासनशयनानां प्रतिष्ठाविधिं वक्ष्ये-विमानं त्रितलायतचतुरश्रमायतवृत्तं वा, मुखमण्टपसोपानसहितं कृत्वा -----।

### ४.१२.४७ त्रितलविमाने ध्रुवबेरावस्थानम्

**अ. २**

आलयं पश्चिमे विष्णोः त्रितलं चोत्तमं भवेत्।
स्थानकासनशयानं तु विपरीतमथापि वा।।

**नि. ९**

प्रासादे त्रितले चास्मिन् आदिभूमौ सुखासनम्।।

शयनं वा प्रकुर्वीत तस्योर्ध्वे शयनासनम्।
तदूर्ध्वे स्थानकं विद्यात् एवमेव विधानतः।।

स्थानकादिक्रमं वापि त्रिभूमिषु समाचरेत्।
अथवा चादिभूमौ तु सुखासीनमिति क्रमः।।

वाराहं नारसिंहं च ऊर्ध्वभूमौ प्रशस्यते।
नारसिंहं च वाराहं कल्पयेत विधानतः।।

**वि. ३८. २६२**

### ४.१२.४८ त्रितलविमाने ध्रुवबेरव्यवस्था

**वि. ३८ . २६२, २६३**

योगभोगादिभेदेष्वेकमार्गेण ध्रुवबेराणि पूर्ववत् कारयेत्। ध्रुवबेरानुरूपं कौतुकादीनि बेराणि कृत्वा -----------।

### ४.१२.४९ त्रितलविमाने परिषद्बेरव्यवस्था

**नि. ९**

वक्ष्ये च सकलं स्थाने स्थानकादौ यथाक्रमम्।।

त्रितलेषु सुरुंशाख्ये(?) कारयेत्पार्षदं क्रमात्।

अधस्तले यथान्यायं स्थानकं कल्यपेत्तथा।।

सावित्रीं चैव गायत्रीं द्वारदक्षिणवामयोः।
गर्भप्रवेशदाक्षिण्ये कुण्डे तत्र यथाविधि।।

भूलोकादि यथारभ्य महर्लोकान्तमालिखेत्।
बाह्यालिन्द्रे तु कोलिन्द्रमाग्नेय्यां चैव सायुधाः।।

कुट्टिमे दक्षिणेनैव सावर्णादीन् समालिखेत्।
तथा वैखानसं चैव वालखिल्यैस्समायुतम्।।

द्वारदक्षिणभागे तु पद्मशङ्खनिधिं तथा।
जयादीन् गार्तिमूले तु न्यष्टदिक्षु च सर्वशः।।

चित्रकेशीं च दिव्यं च ऊर्वशीं च तिलोत्तमाम्।
तासामेव समायुक्तां मन्दिरं च तथैव च।।

किञ्चिद्वायव्यमाश्रित्य पश्चिमे चैव लेखयेत्।
तदूर्ध्वे चासनं कुर्यात् आसनोक्तविधानतः।।

द्वारदक्षिणमारभ्य चतुर्दिक्षु विदिक्षु वै।
कोणे चैव यथान्यायं एकं वा षोडशैव तु।।

स्वाहास्वथ स्वधामेधा कान्तिकल्या इति श्रुता।
स्वाणमुद्दिष्ट(?) इति च श्रद्धाभक्तिरुदाहृता।।

इन्द्रादिषु यथान्यायं तत्तत्स्थानेषु लेखयेत्।
सावित्रीं पुष्पदं चैव अलिन्द्रद्वारपार्श्वयोः।।

कामं चैव तु दक्षिण्ये पुष्परं चैव वामके।
शयनं चैव तस्योर्ध्वे कारयेत विधानतः।।

इन्द्रादिलोकयोश्चैव सुरुंगे गर्भभित्तिके।
द्वारदक्षिणवामे तु मतो मत्तं सुलेखयेत्।।

तद् ब्राह्यपरिषकेलीन्द्रे जयादीनपि लेखयेत्।
द्वारदक्षिणमारभ्य चेन्द्रादीशान्तमाचरेत्।।

प्रमत्तं गर्हितं चैव द्वारदक्षिणवामयोः।
विधिना भोगमार्गेण स्थापनादीन् समाचरेत्।।

द्वितले सकलस्थाने द्विभूम्युक्तविधानतः।
उक्तानुक्तं च यत्सर्वं पर्षदां लक्षणं तथा।।

वासाधिकारे ज्ञातव्यं विशेषमविशेषतः।

**वि. ३८. २६३**

---------------- परिषदामालयं, प्राकारं, मण्टपं गोपुरं च पूर्ववत् कारयेत्।

**४.१२.५० द्वितलविमाने सपरिवाराणां विष्णवादिध्रुवबेराणामवस्थानम्**

**नि. १५**

कल्पयेद्द्वितले मध्ये विष्णुमूर्तिं विचक्षणः।।

श्रीदेवीं दक्षिणे पार्श्वे महीं वामे तथैव च।
तुहणं दक्षिणं वामे बलिदं द्वारपालकौ।।

मार्कण्डेयं च मां चैव कल्पयेदर्चकौ सुधीः।
भोगमार्गविधानेन देवानन्यान् प्रकल्पयेत्।।

तस्मादधस्तादादौ तु तले तत्र विधानतः।

मध्ये पुरुषमूर्तिः स्यात् दक्षिणोत्तरयोरपि।।

श्रियमुर्वीं प्रकल्प्यैव भित्तौ तत्र विशेषतः।
विजयं तु सुराश्चैव सुन्दरं च तथैव च।।

**य. ३१ . ३९ - ४१**

द्वितलस्थापनामार्गं प्रवक्ष्यामि तपोधनाः।
धाम वासाधिकारोक्तं कृत्वाऽलङ्कारसंयुतम्।।

आदौ भोगासनं स्थाप्य द्वितीये --------।
द्वितीये स्थानकं स्थाप्य पूजयेत्कर्तुरिच्छया।।

योगभोगादिमार्गेषु चैकमार्गेण मन्त्रवित्।
ध्रुवबेराणि पूर्वोक्तं कारयेत्तत्तलार्हकम्।।

**नि. ९**

**अ. २**

द्वितले आसनं चादौ स्थानकं शयनं तु वा।
शयनं स्थानकं वापि कर्तुरिच्छानुसारतः।।

**अ. १५.**

द्वितलं चैव कृत्वा तु प्रथमे शयनं भवेत्।।

द्वितीये स्थानकं प्रोक्तं शयनस्याग्रतो भवेत्।
आसने स्थानके वापि आसनं चाग्रतो भवेत्।।

उत्सवं स्नपनं चैव नैमित्तिकबलिं तथा।

## १३. लक्ष्म्यादिध्रुवबेरकल्पनम्

### ४.१३.१ विष्णुवक्षःस्थले स्थापनीयायाः योगलक्ष्म्याः लक्षणम्

**प्र.१७.५६. ६१**

अथ वक्ष्ये विशेषेण लक्ष्मीस्थापनमुत्तमम्।
अष्टधा प्रोच्यते लक्ष्मीः प्रथमा त्वनपायिनी।।

विष्णोर्वक्षस्थले कार्या सर्वालङ्कारसंयुता।
दक्षस्तनस्योर्ध्वभागे वह्न्यश्रे दिव्यमण्डले।।

पद्ममध्ये समासीनां पद्मद्वयकराञ्चिताम्।
वरदाभयहस्तां च मन्दस्मितमुखाम्बुजाम्।।

एवंरूपां प्रकुर्वीत योगलक्ष्मीस्तु सा मता।
योगलक्ष्मीं प्रतिष्ठाप्य श्रीकामः सम्यगर्चयेत्।।

देवेशेन समं कुर्यात् अस्याः स्थापनमुत्तमम्।
कालान्तरे प्रकुर्याच्चेत् हेमरूप्यादिना पुनः।।

कृत्वा श्रीवत्सरूपं तु धारयेद्विष्णुमव्ययम्।
तत्तद् बिम्बानुरूपं च कुर्याच्छ्रीवत्सलक्षणम्।।

### ४.१३.२ भोगलक्ष्म्यः तिस्रः

**प्र.१७. ६२. ६४**

भोगलक्ष्म्यः समाख्याताः श्रीभूनीलाः क्रमादिमाः।
ध्रुवादिषु तु बेरेषु श्रीभूम्यौ देवपार्श्वगे।।

वैकुण्ठमार्गसञ्चारा नीला नित्यसमाश्रिता।
श्रीभूम्योः स्थापनं पूर्वं देवेशेन सहोदितम्।।

देवीभ्यां रहिते देवे कुर्यात्कालान्तरे पुनः।
पृथक् प्रतिष्ठां श्रीभूम्योः कुर्यादाङ्गिरसोक्तिवत्।।

### ४.१३.३ वीरलक्ष्म्याः लक्षणम्

**प्र.१७.६५ - ६७**

वीरलक्ष्मीरिति प्रोक्ता पृथगालयसङ्गता।
आलयाद्दक्षिणे पार्श्वे कुर्यात्तु पृथगालयम्।।

दशतालेन मानेन कुर्याद्देवीं सलक्षणाम्।
पद्मद्वयकरां चैव वरदाभयधारिणीम्।।

किरीटमुकुटोपेतां सर्वालङ्कारशोभिताम्।
पद्मासने समासीनां हेमाभां सर्वमङ्गलाम्।।

### ४.१३.४ गोदापराभिधायाः विजयलक्ष्म्याः लक्षणम्

**प्र.१७. ६८ - ७०**

गोदामन्यां प्रकुर्वीत लक्ष्मीं तु विजयाभिधाम्।
नवतालेन मानेन कुर्यादन्यालयाश्रिताम्।।

दक्षिणेन तु हस्तेन कल्हारं दधतीं तथा।
प्रसारितेतरकरां बद्धधम्मिल्लशोभिनीम्।।

सर्वालङ्कारसंयुक्तां तिष्ठन्तीमेव कारयेत्।
गोदा भूम्यंशजा प्रोक्ता तन्मन्त्रेणाचरेत् क्रियाः।।

**४.१३.५ पचनालये स्थाप्यमानायाः पाकलक्ष्म्याः लक्षणम्**

**प्र.१७. ७१, ७२**

पाकलक्ष्मीः समाख्याता पचनालयसङ्गता।
अष्टतालेन मानेन कुर्यात्तां पचनालये।।

पद्मद्वयाञ्चितकरां वरदाभयधारिणीम्।
आसीनां वाथ तिष्ठन्तीं कुर्याद् भूषणभूषिताम्।

**४.१३.६ आलयद्वितीयमण्डपद्वारे स्थापनीयायाः द्वारलक्ष्म्याः लक्षणम्**

**प्र.१७, ७३ - ७५**

द्वितीयमण्डपद्वारे द्वारलक्ष्मीं समाचरेत्।
पतङ्गपट्टिकामध्ये सर्वालङ्कारशोभिताम्।।

पद्मद्वयाञ्चितकरां वरदाभयधारिणीम्।
पद्मासने समासीनां किरीटादिविभूषिताम्।।

गजौ तु पार्श्वयोः कुर्यात् हेमकुम्भकरौ पुनः।
सिञ्चन्तौ तौ महालक्ष्मीं कुर्यात्कुम्भजलैस्तथा।।

**४.१३.७ अष्टलक्ष्मीध्रुवबेराणां कौतुकादिबेरयोगव्यवस्था**

**प्र.१७, ७६ - ७७**

श्रीभूम्योर्वीरविजयलक्ष्म्योरेव विधीयते।
ध्रुवबेरानुरूपेण बेरान्तरसमर्चनम्।।

तद्रूपं कौतुकं कुर्यात् उत्सवादियथेच्छया।
अन्यासां नैव कुर्वीत ध्रुवार्चामेव कारयेत्।।

### ४.१३.८ वाग्देवीप्रतिष्ठाया उद्देशः

**खि.(अनुबन्धः) पृ. ५०५. १ - ४**

अथातस्सम्प्रवक्ष्यामि वाग्देव्याः स्थापनक्रमम्।
यां देवतां विना देवयक्षगन्धर्वराक्षसाः।।

असुराः किन्नरा नागा मनुष्याश्चान्यजन्तवः।
सर्वे मूकीभवन्त्यद्धा यान्ति कष्टतमां दशाम्।।

यस्याः प्रसादात्सर्वे ते लभन्ते कृतकृत्यताम्।
तां देवीं वाचमखिलपुरुषार्थार्थिनो नराः।।

उपासीरन् भक्तियुक्ता हृदये देवतागृहे।

### ४.१३.९ वाग्देव्या आलयनिर्माणे वास्तुविशेषाः

**खि. (अनुबन्धः) पृ. ५०५. ४ - ७, १०**

स्थापयेदर्चनार्थं तु वाग्देवीं दिव्यरूपिणीम्।।

दिव्याम्बरपरीताङ्गीं दिव्याभरणभूषिताम्।
दिव्यमाल्याकल्पधरां जगद्व्यापारकारिणीम्।।

ग्राममध्ये पूर्वपश्चिमयोस्संस्थाप्य चार्चयेत्।
दक्षिणे मध्यमं तद्वदुत्तरेऽधममुच्यते।।

विदिशासु शुभं विद्यादारामे पर्वते वने।
नदीतटाकाब्धिसरस्तीरेषु स्थापनं स्मृतम्।।

अथवा भगवद् गेहे मण्डपे कूट एव वा।।

कृत्वाश्रयं शुभं स्थानं तत्र संस्थाप्य चार्चयेत्।

**४.१३.१० वाग्देवीस्थापने विमानविशेषाः**

**खि. (अनुबन्धः) पृ.५०५ . ८ - ९**

कुम्भाकारं त्रिकूटं वा हस्तिपृष्ठमथापि वा ।
नन्द्यावर्तं वा विमानं पीठगोपुरसंयुतम्।।

प्राकारादिसमायुक्तं वाग्देव्याः कारयेद् बुधः।

**४.१३.११ वाग्देवीध्रुवबिम्बस्य लक्षणम्**

**खि. (अनुबन्धः) पृ. ५०६. ११ - २०**

पूर्वोक्तविधिना कुर्याद्वाग्देवीं शुभलक्षणाम्।
शिल्पशास्त्रोक्तमार्गेण शिलया चोत्तमां भवेत्।।

ध्रुवानुरूपां वै कुर्यात् कौतुकप्रतिमामपि।
नवतालक्रमेणैव चित्रं चित्रार्धमेव वा।।

जटामण्डलसंयुक्तां स्वर्णवर्णां चतुर्भुजाम्।
ऊर्ध्वदक्षिणहस्तं तु अंक्षमालाधरं तथा।।

मुद्राधरमधोहस्तं वरदं वापि कारयेत्।
ज्ञानमुद्रा मुनिहिता वरदा भोगदा स्मृता।।

ज्ञानमुद्रा च मुद्रासु सदंशं हृदयोन्मुखम्।
सैव मुद्रा पराग्भूता ज्ञेया व्याख्यानमुद्रिका।।

कमण्डलुधरञ्चोर्ध्ववामहस्तं तथाऽधरम्।
हस्तं च पुस्तकधरं कारयेत्तु विचक्षणः।।

पद्मपीठोपरि पुनः कल्पयेद् ब्राह्ममासनम्।

कुर्यात्प्रसारितं पादं दक्षिणं कुञ्चितं परम्।।

सर्वाभरणसंयुक्तां श्वेतवस्त्रविभूषिताम्।
कक्ष्याबद्धस्तनयुगां छन्नवीरोपशोभिताम्।।

कुर्यात्सकलसौन्दर्यसंस्कृतां बुद्धिदेवताम्।
शुक्लवस्त्रधरां शुक्लां शुक्लमाल्यानुलेपनाम्।।

शुक्लपद्मासनां देवीं केचिदाहुर्मनीषिणः।

### ४.१३.१२ ज्येष्ठाया अवतरणम्

**खि. (अनुबन्धः) पृ. ५१७. १८ - ४९**

समीक्षमाणा देवेशं पद्मनाभमुवाच सा।
'त्वमादिदेवो देवेश ! ब्रह्मणस्त्वं पिता ह्यसि।।

मम त्वं देहि पृच्छन्त्या वरं वरद वास्तवम्।
इत्युक्तो भगवान् विष्णुर्वरदानरतोऽच्युतः।।

तां स्मयन्निव पप्रच्छ 'कं ते दद्यामहं वरम्'।
वरदेनैवमुक्ता सा प्रत्यभाषत वै प्रभुम्।।

उत्पत्योत्पत्य सा ज्येष्ठा सर्वदैवतमध्यगा।
नमस्कृत्य ततो देवं प्रणयावनता तदा।।

'नमस्करोमि देवेश भूयः कृत्वा प्रदक्षिणम्।
अनुगृह्णीष्व मां देव वरं देहि ममानघ !।।

सत्यमूर्तिः स्वयं त्वं वै सर्वादिस्सर्वतोमुखः।
सहस्रशीर्षा देवेशः सहस्राक्ष इति श्रुतिः।।

सर्वेषां च वरिष्ठस्त्वं सर्वदा सर्वथाऽच्युत।

त्वं देहि मे वरं दिव्यं भूयश्चैव वरो भव'।।
इत्युक्तो भगवान् प्रीतः परमानन्दमास्थितः।
वरिष्ठामाह देवानां ज्योतींषि म्लापयन्त्यसि।।

यदि नेच्छसि लोकेऽस्मिन् देवानप्यसुरानपि।
सुखं वस त्वं लोकेऽत्र नित्यसौख्यवरप्रदा।।

मनुजान् राक्षसानन्यान् दनुजान् भृतचारणान्।
नाशयिष्यसि चैवेष्टान् सुखं संवासयिष्यसि।।

'एवं दत्तो वरो मुख्यस्ते मया चारुलोचने'।
एवमुक्ता भगवता ज्येष्ठा पुनरचोदयत्।।

'भर्तारं कमहं देव वृणुयां ब्रूहि ते मतम्'।
इत्युक्तो भगवान् देवः कलिमाहूय चात्वरः।।

'एनं वृणीष्व भद्रं ते सुखयिष्यति त्वामसौ'।
इति श्रुत्वा तदा देवी तथा चेदद्य दीयताम्।।

तवाधिकारं राज्येऽस्मिन् देहि भर्तुश्च मे मम।
'ततः प्राह पुनर्देवः सम्भाव्यात्मानमात्मना।।

'तथाऽस्त्विति वरं दत्वा कले राज्यमदाद्धरिः।
अभिषिच्य कलिं यौवराज्ये प्रोवाच वै हरिः।।

सर्वान् देवान् समाहूय सान्त्वयन् श्लक्ष्णया गिरा।
'यूयमद्यारभ्य देवास्स्याला भवत वै कलेः'।।

इति सम्भाविता देवा ज्येष्ठादेव्यनुजाः कृताः।

वरुणालयमेवास्याः पितरं पर्यकल्पयत्।।

तदा प्रभृति सा ज्येष्ठा सर्वलोकेषु पूज्यते।
पूजनीयाऽभवत्पूज्यैस्सर्वैरेव सुखार्थिभिः।।

दारिद्र्यभीरुभिश्चैव पूजनीया शुचिव्रतैः।
अर्हणीया वरारोहा शुभदा सर्वकामदा।।

ज्येष्ठावतरणे जाते अब्धावप्सरसां गणैः।
सहिता चानुजाता सा देवी कमललोचना।।

इन्दिरा श्रीवत्सरूपा सुप्रमोदेति कीर्तिता।
सुरा तामनुजाता च तां देवी जगृहुस्तदा।।

आहूय वरुणो देवं कौस्तुभेन सहैव ताम्।
देवीं प्रादाद्विष्णवे तु ब्रह्मेशानपुरस्स्कृतः।।

देवतास्सङ्गतास्तत्र मेनिरे परमं हरिम्।
सर्वलोकहितार्थं ते प्रार्थयामासुरीश्वरम्।।

'एषा न प्रम्लायमाना त्रीन् लोकान् स्वश्रिया सह।
लोकक्षेमङ्करी भूत्वा चिरं कालं समेधताम्।।

तथैनां शाधि देवे' ति विरेमुस्ते मुदान्विताः।
एवं सम्प्रार्थितो विष्णुः ज्येष्ठामाहूय चावदत्।।

'अनवद्याय लोकानां देवि त्वमनघा वस'।
इत्युक्तवति देवेशे ज्येष्ठा विष्णुमुवाच ह।।

ममानुजायाश्च नराः येऽपकुर्वन्ति दारुणम्।

नाशयिष्यामि तानेव ममैषा स्याद्वशे स्थिता।
यस्य कुप्याम्यहं देव न कदाप्यत्र सा वसेत्।
यस्य तुष्याम्यहं सैषा तत्र तिष्ठेत्प्रतिष्ठिता।।

इत्युक्त्वा तु वरारोहा लक्ष्मीं सन्दीप्ततेजसम्।
अङ्कमारोप्य चालिङ्ग्य ददौ तां विष्णवे मुदा।।

तदाप्रभृति सा देवी देवज्येष्ठेति कीर्तिता।
भूर्ज्येष्ठेत्युदिता ह्यादौ भुवर्ज्येष्ठेति वै ततः।।

सुवर्ज्येष्ठेति स्वर्लोकान्नित्यं सम्पूज्यते ततः।
कलेः राज्ञे प्रदानाच्च कलिराज्ञीति संस्मृता।।

कलेः पत्नी तथा भूता कलिपत्नीति च स्मृता।

### ४.१३.१३ ज्येष्ठायाः आलयनिर्माणे वास्तुदेशाः
**खि. (अनुबन्धः) पृ.५२१. ५३ - ५४**

उद्यानवनमध्ये वा तटाकतट एव वा।
कुल्यातीरे नदीतीरे केदारान्तर एव वा।।

ग्रामस्य नैरृऋते भागे यत्र चापि मनोहरे।
स्थाने तत्राऽलयं कुर्यात् वास्तुशास्त्रोक्तमार्गतः।।

### ४.१३.१४ ज्येष्ठायाः आलयनिर्माणम्
**खि. (अनुबन्धः) पृ. ५२१. ५५ - ६४**

भूमिं परीक्ष्य विधिना भूशुद्धिं प्रथमं चरेत्।
कपित्थं वा मधूकं वा लाङ्गलार्थं तरुं हरेत्।।

वायुरेणुसवर्णौ(?) तु गृह्णीयाद्वृषभौ तथा।
एकवर्णौ तथा सौम्यौ अनुस्यूतावनिन्दितौ।।

पूर्वोक्तेन विधानेन ताभ्यां वै कर्षणं चरेत्।
तत्र चोप्य यवादीनि बीजान्युक्तानि पूर्ववत्।।

प्रवृद्धेषु च सस्येषु अर्धपक्वेषु तानि तु।
गोगणेभ्यो निवेद्यैव ततो भूम्यै निवेदयेत्।।

वास्तुदेवानर्चयेच्च यथापूर्वं समीरितम्।
तत्र कुम्भं प्रतिष्ठाप्य भूमियज्ञं यजेत्क्रमात्।।

ततः पूर्वोक्तमार्गेण ज्येष्ठामूर्तिं प्रकल्पयेत्।
तथैव धृष्णुकायास्तु निवासं परिकल्प्य च।।

ब्रह्मपद्मविधानेन खनित्वा कार्यमारभेत्।
आदित्योदयकाले तु ब्रह्मपद्मं चरेत्तथा।।

पद्माभावे तथा ग्राह्यं कुमुदं नीलमुत्पलम्।
सुस्पष्टं फुल्लमाहृत्य प्रक्षिपेत्प्राङ्मुखः क्रमात्।।

सिद्ध्यसिद्ध्यौ समीक्षेत शुभं चाशुभमेव च।
परीक्ष्य सिद्धौ कुर्वीत नारभेतान्यथा क्रियाम्।।

काले पुनरतीतेऽब्दत्रयेऽसिद्धौ यतेत च।
दुर्निमित्तेषु तत्रापि कार्यारम्भं न कारयेत्।।

**४.१३.१५ ज्येष्ठायाः स्थापने विमानविशेषाः**

**खि.(अनुबन्धः) पृ. ५२२. ६५, ६६**

कुम्भाकारे त्रिकूटे वा स्वस्तिके हस्तिपृष्ठके।

विमाने स्थापयेद्देवीं ज्येष्ठां तत्र च पूजयेत्।।

बालागारे प्रतिष्ठाप्य पूर्वं शक्तस्समर्चयेत्।

**४.१३.१६ ज्येष्ठाध्रुवबेरस्य लक्षणम्**

**खि. (अनुबन्धः) पृ. ५२३. ६९ - ७२**

आकाश सस्यवर्णां च रक्तवर्णाम्बरां तथा।।

उरस्स्थललसद्धारां ग्रैवेयादिविभूषिताम्।
शिरोवर्तनसंयुक्तां शिरोमाल्यैरलङ्कृताम्।।

ईषत्कृष्णान्तनयनां शुद्धकृष्णान्ततारकाम्।
निधियुक्तं वाऽभयदं दक्षिणं हस्तमाचरेत्।।

वाममुत्पलसंयुक्तं द्विभुजामेवमाचरेत्।

**४.१३.१७ दुर्गार्चनाया उद्देशः**

**खि. (अनुबन्धः) पृ.५३२. ६ - ८**

ऐहिकामुष्मिकं सर्वमिच्छन् देवीं प्रपूजयेत्।
ब्रह्मवृद्धिमभीप्सुभिः ब्राह्मणैः क्षत्रियैस्तथा।।

काङ्क्षमाणैः शत्रुजयमर्चनीया नृपाङ्गणे।
यतः सा वैष्णवी शक्तिः तामुद्दिश्य कृतार्चनम्।।

भवेत्सिद्धिदमित्यत्र नैव कार्या विचारणा।

**४.१३.१८ दुर्गाया आलयनिर्माणे वास्तुविशेषाः**

**खि. (अनुबन्धः) पृ. ५३२. ८ - ११**

ग्रामे वा नगरे वापि पत्तने कुटिकेऽपि वा।।

पर्वताग्रे नदीतीरे कान्तारे वा सरित्तटे।
कारयेदालयं तत्र कर्षणादीनि चादरात्।।

हरेरुक्तविधानेन कारयेद् भक्तिमान्नरः।
राज्ञां गृहार्चनाय स्याद्वेशमाभिमुखमालयः।।

धनाधिपदिशः पूर्वे तथा द्वारस्य दक्षिणे।
निर्मित्सुरालयं देव्याः -----------।।

## ४.१३.१९ दुर्गाध्रुवबेरस्य आलये स्थापनस्थानम्

**खि. (अनुबन्धः) पृ. ५३४. २९, ३०**

दुर्गायाः स्थापनं ग्रामे नगरे च विशेषतः।।

सर्वकामसमृद्धिं च सर्वशान्तिं च यच्छति।
स्थापयेद् ब्रह्मणः स्थाने पृथक् देवीं चतुर्भुजाम्।।

## ४.१३.२० दुर्गाध्रुवबेरस्य उपादानद्रव्यम्

**खि. (अनुबन्धः) पृ. ५३४. ३१**

केवलं शिलया कुर्यान्मोक्षार्थी प्रतिमां तथा।

## ४.१३.२१ दुर्गाध्रुवबेरस्य लक्षणम्

**खि.(अनुबन्धः) पृ. ५३३ - ५३४, २३ - २९, ३१, ३२**

चतुर्भुजां तडिद्वर्णां मकुटेन स्वलङ्कृताम्।
शङ्खचक्रंधरां देवीं बद्धाञ्जलिपुटां तथा।।

सस्यश्यामनिभां कुर्यात्कक्ष्याबद्धपयोधराम्।
सौम्यरूपमिदं प्रोक्तं सर्वसम्पत्समृद्धिदम्।।

अथवाऽष्टभुजां कुर्यादिच्छन् शत्रुविनाशनम्।
शक्तिशाङ्र्गासिचक्राणि शरलाङ्गलमुद्गराः।।

खेटकं चायुधानि स्युः रूपं घोरतमं भवेत्।
महिषासुरमूर्धस्थ सव्यपादाम्बुजां तथा।।

तथा कुञ्चितवामाङ्घ्रि वीर्यार्थी कारयेत्सदा।
देव्या बेरं ध्रुवाख्यं स्यादेवं लक्षणसंयुतम्।।

अथ वा सुखमासीनां कुर्यात्सिंहासने शुभे।
सौम्यरूपां क्रियाद्देवीं सस्यश्यामां चतुर्भुजाम्।।

सर्वप्राणिहिता ह्येषा प्रतिमा पुष्टिदायिनी।

## १४. उत्सवचक्रकल्पनम्

### ४.१४.१.० उत्सवचक्रस्य द्वैविध्यम्

**अ. ३२**

अतः परं प्रवक्ष्यामि चक्रस्य लक्षणं परम्।
चक्रं तु द्विविधं प्रोक्तम् अमूर्तं च समूर्तकम्।।

**वा. ३२**

### ४.१४.१.१ अमूर्तचक्रस्य लक्षणम्

**वा. ३२**

------------ अमूर्तं निष्कलं स्मृतम्।

**अ. ३२**

निष्कलं प्रतिमाहीनं चक्रं सम्प्रतिमाकृतिम्?।

**वा. ३२**

अन्यत्र केवलं चक्रं कृत्वा तत्काश्यपोक्तवत्।
मूर्तिमन्त्रेण हुत्वा तु निष्कलं प्रीतिसंज्ञितम्।।

### ४.१४.१.२ मूर्तचक्रस्य लक्षणम्

**वा. ३२**

मूर्तं सकलमित्युक्तं -------------।।

**अ. ३२**

सकलं प्रतिमां विद्यात् ऐहिकामुष्मिके तथा।।

**४.१४.२ मूर्तचक्रस्य सत्त्वे बलिबेरकल्पननिषेधः**

**वा. ३२**

मूर्तं चक्रं यदि स्यात्तु बलिबेरं न कारयेत्।।

**४.१४.३ सकलनिष्कलचक्रयोः फलविवेकः**

**वा. ३२**

सकलं सर्वसिद्धिः स्यात् निष्कलं मूर्तिरेव च।

**४.१४.४ उत्सवचक्रम् उत्तमम् अरसङ्ख्यानुरोधेन**

**वि. ५०. ३३६**

चतुर्विंशत्यरमुत्तमम्।

**स. ५३. ५**

शताष्टारयुतं श्रेष्ठम्।।

**४.१४.५ उत्सवचक्रं मध्यमम् अरसङ्ख्यानुरोधेन**

**वि. ३३६**

विंशत्यरं मध्यमम्।

**स. ५३. ५, ६**

------------- पञ्चाशद्भिररैर्युतम्।।

मध्यमं तु

**४.१४.६ उत्सवचक्रम् अधमम् अरसङ्ख्यानुरोधेन**

**वि.५०. ३३६**

षोडशारमधमम्।

**स. ५३. ६**

-------- चतुर्विंशत्यरैर्युक्तं कनिष्ठिकम्।।

**४.१४.७.० उत्सवचक्रस्य नवविधः विस्तारः**

**अ. ३२**

अथवा चक्रविस्तारं नवधा भवति द्विज।।

अष्टाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्।

**४.१४.७.१ उत्सवचक्रस्य उत्तमोत्तमविस्तारः**

**अ. ३२**

चतुर्विंशतिमात्रान्तं उत्तमोत्तममेव तत्।।

**४.१४.७.२ उत्सवचक्रस्य उत्तममध्यमविस्तारः**

**अ. ३२**

द्वाविंशदुत्तमे मध्यम् ।

**४.१४.७.३ उत्सवचक्रस्य उत्तमाधमविस्तारः**

**अ. ३२**

---------- विंशतिश्चोत्तमाधमम्।

**४.१४.७.४ उत्सवचक्रस्य मध्यमोत्तमविस्तारः**

**अ. ३२**

अष्टादशाङ्गुलं चान्यत् -------।

**४.१४.७.५ उत्सवचक्रस्य मध्यममध्यमविस्तारः**

**अ. ३२**

----------- षोडशाङ्गुलमेव च ।।

### ४.१४.७.६ उत्सवचक्रस्य मध्यमाधमविस्तारः

**अ. ३२**

चतुर्दशाङ्गुलं पश्चात् मध्यमं त्रयमेव।

### ४.१४.७.७ उत्सवचक्रस्य अधमोत्तमविस्तारः

**अ.३२**

द्वादशाङ्गुलमात्रं तु ----------।

### ४.१४.७.८ उत्सवचक्रस्य अधममध्यमविस्तारः

**अ. ३२**

---------- दशाङ्गुलमनन्तरम्।।

### ४.१४.७.९ उत्सवचक्रस्य अधमाधमविस्तारः

**अ. ३२**

अष्टाङ्गुलं तु पूर्वोक्तं अधमत्रयमेव वा।

### ४.१४.८ उत्सवचक्रस्योपादानद्रव्यम्

**वि. ५०. ३३५**

अथोत्सवचक्रं सौवर्णं, राजतं, ताम्रम्, आयसं, दारवं वा कृत्वा,

--------------------------------------------------

दन्तद्रव्येण सहजमेव कुर्यात्। अथवा चन्दनेन वृक्षेण वा कुर्यात्।

**स. ५३. १, २**

**अ. ३२**

कलागोलकभागं च (मात्रं च ) कलाषोडशयः (?)क्रमात्।।

पट्टारकूटहारं च पट्टं पश्चाद्यथायतम्।

अथवा वेत्रबन्धं च पीठायतविधिक्रमात्।।

पट्टारमध्ये हारं च पट्टायथतथा बुधः।
भानुद्विभानुपङ्क्ती द्वौ मनुऋत्विग्दिशोपि वा।।

सङ्ख्या त्वराणां सर्वत्र वेणुपत्राकृतिर्भवेत्।
पीठोर्ध्वे मतिमांस्तत्र स्थापयेदचलं तथा।।

अथवा फलकोर्ध्वे तु स्थापयेच्चक्ररूपकम्।
रत्नासार्धं यथापूर्वं तथैव मतिमूर्तकौ(?)।।

**४.१४.९ चक्रस्य बलिबेरेण साकम् उत्सवे भ्रामणम्**

**वा. ३२**

चतुरङ्गुलं तु तद्दण्डं? व्यालसिंहोपरि स्थितम्।
स्थापयित्वा यथान्यायं बलिबेरैस्सहैव तु।।

भ्रामयित्वोत्सवे विद्वान् बलिं तत्रैव निक्षिपेत् ।

**४.१४.१० उत्सवचक्रनिर्माणम्**

**वि. ५०. ३३५, ३३६**

मानाङ्गुलेन, मात्राङ्गुलेन वा ध्रुवबेरस्य कौतुकस्य वा देहलब्धाङ्गुलेन वा, षोडशाङ्गुलं, द्वादशाङ्गुलमष्टाङगुलं वा, समवृत्तं, तस्यापरपट्टविस्तारं त्र्यङ्गुलं, द्व्यङ्गुलं एकाङ्गुलं वा, तन्मध्यघनमेकाङ्गुलं आरकूटस्य विस्तारं त्र्यङ्गुलं द्व्यङ्गुलं वा, पद्मं सविशेषमरायामं, अराणि वेणुपत्रसमानि, चतुरश्राणि वा चतुर्विंशत्यरमुत्तमं, विंशत्यरं मध्यमं, षोडशारमधमम् तन्मूर्ध्नि पार्श्वयोश्च ज्वालायामं त्र्यङ्गुलं, प्रभाज्वाला समज्वला वा---------- ।

**स. ५३.१ - ११**

**य. ३७. १ - ७**

उत्सवार्थं विशेषेण चक्रमानं प्रवक्ष्यते।
मानाङ्गुलेन वा तस्य मानं मात्राङ्गुलेन वा।।

ध्रुवस्याङ्गुलिना वाथ कारयेद्धाटकादिना।
यवमात्रेण विस्तारं तोयतारं प्रकथ्यते।।

तेनैव समवृत्तं तं कृत्वा पश्चाद्विचक्षणः।
कस्य वा चरणं वर्गमश्विन्यङ्गुलिना क्रमात्।।

अराणामयुतं पश्चाद् द्विजेन हृदयं तथा।
तस्य मध्यमसूत्रस्य पार्श्वयोरुभयोरपि।।

एकाङ्गुलघनं मध्यं बहिः पट्टस्य पार्श्वयोः।
यवायतघनं तत्स्याद्यथाशोभं क्रमात्कृशम्।।

गुरुश्चार्चद्वयाराः स्युः पङ्क्तियुग्ममथान्तरा।
षोडशारास्तथा हीनास्ते त्वश्रा वेणुपत्रवत्।।

तन्मूर्ध्नि पार्श्वयोर्ज्वालाश्चान्याङ्गुलसमायुतम्।
प्रभाज्वाला समा ज्ञेयास्त्रितया (नता) स्तीक्ष्णदर्शनाः।।

**खि. ३१. १ - ६**

अथोत्सवार्थं चक्रस्य सम्प्रवक्ष्यामि लक्षणम्।
मानाङ्गुलप्रमाणेन विष्कम्भो द्वादशाङ्गुलम्।।

तस्यावरणपटस्य विस्तारः कोलको भवेत्।
आरकूटप्रदेशस्य घनमेकाङ्गुलोन्नतम्।।

विस्तारश्चारकूटस्य वह्न्यन्यङ्गुलमुदाहृतम्।

अर्धाङ्गुलाधिकाः प्रोक्ता आराश्च चतुरङ्गुलाः।।

वेणुपत्रसमाकाराः चतुरश्रा विशेषतः।
अराः षोडश चोद्दिष्टाः ते यथायोगबन्धनाः।।

कूटमध्यं विजानीयात्फुल्लपङ्कजसन्निभम्।
पृष्ठं तस्य विनिर्दिष्टं पद्मस्य मुकुलोपमम्।।

प्रभाज्वाला समज्वाला त्रितयेन युतं तु यत्।
वल्ली समचतुर्लेखा पट्टमध्यं विनिर्दिशेत्।।

**वा. ३२**

ध्रुवबेरस्य विस्तारं सर्वस्याङ्गुलविस्तृतम्।।

गृहीत्वा द्विगुणीकृत्य भ्रमीकृत्य प्रयत्नतः।
अथवा द्विगुणीकृत्य भ्रामयेदिति केचन।।

द्वादशारं तु मध्ये तु कृत्वा तत्र यथाक्रमम्।
द्वात्रिंशद्वाथ कुर्वीत षोडशारमथापि वा।।

पञ्चानलादिसंयुक्तं मध्यादिबहिः क्रमात्।
गोलकं चक्रमध्ये तु वृत्तमत्र प्रकल्पितम्।।

वसुर्दलं प्रकुर्वीत सकर्णिकसमावृतम्।

## ४.१४.११ सिंहधृतचक्रनिर्माणम्

**वि. ५०. ३३६**

तत्पट्टमध्ये वल्लीसमचतुर्लेखा युञ्जीत। तस्याधस्तात्फलकाः कुम्भतापीश्च युगाङ्गुलविस्तारोच्छ्रयाः, षण्मात्रायताः, उभयोः पार्श्वयोः द्वौ सिंहौ चक्रमुद्वहन्तौ वा कारयेत्।

दण्डायामं चक्रायामात् त्रिगुणं, द्विगुणं, समं वा, षोडशाङ्गुलं, द्वादशाङ्गुलं,

नवाङ्गुलं वा मूलनाहं, तदष्टांशोनमग्रनाहो, मूलादूर्ध्वं क्रमात् कृशं, दण्डादधस्तात्पीठं चतुरङ्गुलोन्नतम्, अष्टाङ्गुलोन्नतविस्तारायामं, चतुरश्रं वृत्तं वा, पद्माकारम् अष्टदलैरावृत्तं कृत्वा, सुदृढं संयोजयेत्। अत्रानुक्तं सर्वं शिल्पिशास्त्रोक्तविधिना कारयेत्।

**य. ३७. १२ - २०**

अपरं सिंहवदनं पद्मस्य मुकुलं तु वा।
कारयेदथवा धीमान् पार्श्वयोरुभयोरपि।।

चक्रेशं नैव चक्रस्य ज्वालायुक्तमथापि वा।
पद्मं वा सिंहवक्त्रं वा मकराननमेव वा।।

फलकोपरि वा योगे स्थापयेत्सुदृढं यथा।
अथवा सिंहयोर्मूर्ध्नि स्थापयेत्फलकोपरि।।

तच्चक्रस्य समं वाथ द्विगुणं त्रिगुणं तु वा।
चक्रेशस्य समं वाथ गदायामं प्रकथ्यते।।

यथार्हनाहसंयुक्तं समवृत्तमृजुं तथा।
फलकाकुम्भताटीभिर्भूषितां कारयेद् गदाम्।।

चक्रं तमथवा धीमान् गदां चैव? सलक्षणम्।
स्थापयेत्पद्मपीठोर्ध्वे सुदृढं विधिचोदितम्।।

चतुरङ्गुलोन्नतं पीठमष्टाङ्गुलयुतं तथा।
अश्रं तत्समवृत्तं वा दलैरष्टभिरावृतम्।।

कारयित्वा गदामूले पूर्ववद्योजयेत्क्रमात्।

नागाङ्गुलोदयं कुर्याद् गदां हीनेऽथवा यदि।।

अत्राप्यनुक्तं यत्सर्वं कारयेच्छिल्पशास्त्रवत्।
सिद्धार्चनादिकं सर्वं कारयेत्पूर्ववद् बुधः।।

**खि. ३१. ७ - १८**

योगदण्ड अधः स्यात्तु कोलकायाम इष्यते।
नाहस्तस्य समुद्दिष्टः गुरुभिश्चतुरङ्गुलः।।

फलकायामविस्तारौ पञ्चाङ्गुलमितौ स्मृतौ।
उभयोः पार्श्वयोः कुर्यादुभौ सिंहौ व्यवस्थितौ।।

तस्याधस्ताच्च कुम्भं च यथायोगमनिन्दितम्।
कुम्भाकारं च वलयं दण्डमध्यविभूषितम्।।

पद्माकारं तु पीठस्य दलैः षोडशभिर्युतम्।
(नेमिरर्धाङ्गुलं ज्ञेयं नाभिदेशं तु गोलकम्।।(?)

व्रीलितं सिंहवदनं महानासिकवल्लिखेत्) ।
दलान्तरं परिणाहोऽधोमुखो यमितो भवेत्।।

पञ्चाङ्गुलसमुत्सेधः पद्मपीठस्य मध्यतः।
(नराकृतिः स्थितो देवः किरीटाभरणाञ्चितः) ।।

सर्वमेतद्यथायोगं घनयुक्तमनिन्दितम्।
गर्भक्रियां पुनः कृत्वा मधूच्छिष्टविधानतः।।

विद्राव्य लोहं यत्नेन सर्वमेतत् प्रपूरयेत्।
चक्रदेवस्य यो लोहः दण्डस्तल्लोह उच्यते।।

अथवा शुभवृक्षस्य सारो दण्डः प्रशस्यते।
चक्रायामत्रिगुणितो दण्डायामः स्मृतो बुधैः।।

तस्य मूलपरिणाहो द्वादशाङ्गुलमुच्यते।
मूलादूर्ध्वं कृशं कृत्वा अग्रे नाहो नवाङ्गुलम्।।

पीठाग्रे द्व्यङ्गुलं योज्यं वलयं दण्डमध्यमे।
कुम्भाधस्तात् फलकयोः दण्डाग्रं कोलकं तथा।।
जत्वादिभिस्समालिप्य योजयेच्छङ्कुना दृढम्।
अनुक्तमत्र यत्सर्वं युक्त्या बुद्ध्वा तु कारयेत्।।

**अ. ३२**

वीर्यदण्डनदं नित्यम् आर्षदं च फलप्रदम्।
दण्डमानं प्रवक्ष्यामि चक्रायामवदेव तु।।
यद्रूपं चक्रमानं तु तद्रूपं गणतां गुरुः।
चक्रस्य द्विगुणं वाथ अर्धम् वार्धमथापि वा।।
पञ्चभागं त्रिभागं वा बिम्बमानमथापि वा।
पञ्चाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्।।
पञ्चविंशतिमात्रान्तं भवेदङ्गुलमानकम्।
भवान्तदण्डदीर्घं स्यात् दण्डोत्सेधं त्रिधा भवेत्।।
चक्रार्धं पीठतुङ्गं स्यात् एकांशं दण्डदीर्घकम्।
एकांशं कुम्भमध्यादीन् कारयेल्लक्षणान्वितम्।।
अथवा ग्रामभागं च विभजेद्दण्डतुङ्गकम्।
एकांशं पीठतुङ्गं स्यात् द्विभागं दण्डदीर्घकम्।।

शेषांशं कुम्भमध्यादीन् कारयेल्लक्षणान्वितम्।

तच्चक्रस्य त्रिभागैकं फलकं विपुलं क्रमात्।।

फलका च त्रिभागैकं शुण्डस्य विपुलं क्रमात्।
तन्मानं त्रिगुणं नाहं तन्मानं त्रिगुणं तु वा।।

पीठं तत्पञ्चभागं वा रसाङ्गुलमथापि वा।
चतुरश्रं च वृत्तं वा पीठं कुर्याद्यथोचितम्।।

कुम्भदण्डादिकानन्यान् अलङ्कारादि पूर्ववत्।
तद्दण्डस्य घनं कुर्यात् सुषिरं चेदनर्थकम्।।

अशक्तो दारुणा कुर्यात् दण्डमानं यथाविधि।
फलकोर्ध्वपार्श्वयोर्द्वौ च सिंहौ द्वौ चक्रमुद्वहौ ।।

कुर्याद्दृढं यथायोगं सर्वलक्षणसंयुतम्।
गदां च चक्ररूपेण सार्धं कृत्वा यथाक्रमम्।।

पीठांशमङ्गुलं चैव स्थापयेदचलं तथा।
अथवा फलकोर्ध्वे तत् स्थापयेच्चक्ररूपकम्।।

रत्नं सार्धं यथापूर्वं तथैव मतिमान् गुरुः।
पट्टहीनं च कुर्याच्चेत् चक्राङ्गं पीठमुत्तमम्।।

कृत्वा सलक्षणं चोक्तचक्रोर्ध्वे स्थापयेत्सुधीः।
बिम्बं चेत्कूटमध्ये तु पुरतः पूर्वचोदितम्।।

सपृष्टे कृत्रिमं चक्रं पङ्कजं वाथ चोदितम्।

--------------------------------

--------------------------------

तेषूक्तेषु क्रमाच्छ्रेष्ठं पट्टादीन् लक्षणान् शृणु।।

अग्निकर्तुरसं चैव कर्तुरग्निर्यथाक्रमम्।
पट्टारकूटहारान्यान् उत्तमत्रयमेव तत्।।

उत्तमोत्तममध्ये तु पट्टौ कूटं च पूर्ववत्।
अराणि पञ्चमात्रान्तं कारयेद्विधिचोदितम्।।

श्रेष्ठस्य कन्यसे धीमान् नयकूटयथाक्रमम्।
इष्टानि मध्यमोक्तञ्च कारयेदायतानि च।।

भूताश्रमानि चाराणि कूरान्यानि चायतम्।
मध्यमत्रयमार्गेषु कारयेद्विधिचोदितम्।।

अधमत्रयेषु चाराणि गोलकं चैव कारयेत्।
श्रेष्ठं कूटद्वयं चक्रे पट्टमेकेन कारयेत्।।

पीठदण्डादिकानन्यानि? सर्वाणि नवधा विधौ।
चक्रबिम्बं च सर्वेषां कारयेत्पूर्ववद् बुधः।।

## ४.१४.१२ पुरुषधृतचक्रनिर्माणम्

### वि. ५०. ३३६

अथवा नवतालेन चक्रं मानाङ्गुलेन सप्ताङ्गुलं, नवाङ्गुलमेकादशाङ्गुलं वा, द्विभुजं, प्राञ्जलीकृत्य स्थितं, किरीटाद्याभरणान्वितं, त्रिभागैकभागं पीठं, तस्योपरिभागे चक्रविस्तारं मानाङ्गुलेन द्वादशाङ्गुलमुत्तमं, नवाङ्गुलं मध्यमं, षडङ्गुलम् अधमम्। अन्यत् सर्वं पूर्ववत्। तस्य शिरश्चक्रं संयोज्य सुदृढं कुर्यात्।

**य. ३७. ८ - ११**

चक्रेशं हृदये तस्य नवतालेन मानतः।
त्रयोदशाङ्गुलै रुद्रनवसप्ताङ्गुलैस्तु वा।।

तच्चक्राङ्गुलिना देवं द्विभुजं प्राञ्जलीयुतम्।
आसीनं स्थानकं वाथ कौतुकं तद्यथा तथा।।

सर्वाभरणसंयुक्तं तत्वस्मरणसंयुतम्।
पीठयुक्तं वियुक्तं वा कारयेद्धृदयेऽधिपम्।।

करण्डमकुटसंयुक्तमर्धचन्द्राङ्गसंयुतम्।
सुमुखं चानपायीशं पुरतः कल्पयेत्तथा।।

**अ. ३२**

चक्रमासनमूर्ध्वे तु स्थापयेत्स्थानकं तथा।
सप्ताङ्गुलं समारम्य द्वितीयाङ्गुलवर्धनात्।।

सप्तदशाङ्गुलान्तं च स्वोच्चमाने यथाविधि।
बेरं तत्स्थानकं कृत्वा पीठोर्ध्वे स्थाप्य पूर्ववत्।।

तस्य मूर्ध्नि च तच्चक्रं स्थापयेदिति केचन।
उत्तमं चारकूटस्य मध्ये बिम्बं सलक्षणम्।।

कृते शान्तिकरं सौम्यं पूर्वमेव तु मध्यकम्।
चक्रबिम्बं यथा कृत्वा तस्य मूर्ध्नि च चोदितम्।।

संस्थाप्य चार्चनं तत्तु कन्यसं चाह तत्त्ववित्।
निष्कलं निष्कलं कुर्यात् सकलं सर्वकामदम्।।

--------------------------------

--------------------------------

चक्रमध्ये स्थिताकारां कारणबिम्बमध्यमात्।
आसीनं वा स्थितं वापि कारयेत्कूटपूर्वतः।।

अथवा पूर्वभागे तु ब्रह्मसूत्रेण लक्षयेत्।
सकृच्च वदनं कुर्यात् अपरो? मुखलक्षणम्।।

सर्वाण्यराणि सङ्ख्यानि अष्टादिपञ्चदशान्तकम्।
कारयेत्तान् यथाशक्ति यथाशोभं यथादृढम्।।

**वा. ३२**

किरीटहारवलयैः भूषणैर्भूषितान्यकैः।।

द्विभुजं प्राञ्जलिं कृत्वा सकलं देवमव्ययम्।
दंष्ट्राकरालवदनं चोग्रदृष्ट्याम्बरैः सह।।

मूर्तं तन्नेमिमध्ये च चान्तरालं यवद्वयम्।
मूर्तं चक्रमित्युक्त्वा स्थापयित्वात्रिणोक्तवत्।।

### ४.१४.१३ चक्रमध्ये भुजाष्टकदेवकल्पनम्

**वा. ३२**

नेमिमध्ये स्थितं देवं बलिबेरयुतं क्रमात्।।

भुजाष्टकसमायुक्तं चतुर्भुजमथापि वा।
वृत्तं वा चतुरश्रं वा पीठं तत्रैव योजयेत्।।

प्रभामण्डलसंयुक्तं शिखानलसमायुतम्।

---------------------------

------------------------------

चतुर्भुजसमायुक्तं भुजैश्चोर्ध्वैर्विशेषतः।
पाशाङ्कुशं च सन्धार्य अभयं कटकं परम्।।

भुजाष्टके विशेषेण धृत्वा चैवास्त्रमष्टकम्।
अभयं मुसलं चैव पाशं खड्गं तु दक्षिणे।।
अङ्कुशं च धनुश्चैव मुसलं कटकं परम्।
शङ्खचक्रगदापद्मं मुसलं शाङ्र्गमेव च ।।

पाशाङ्कुशधरं देवं धृत्वा चैवेति केचन।
एवं चाष्टभुजं देवं स्थितं षट्कोणमध्यगम्।।

## १५. ध्रुवबेरावस्थानभेदाः

### ४.१५.१ ध्रुवबेरं त्रिविधं स्थानकाद्यवस्थानानुरोधेन

**नि.१३.**

स्थानकं चासनं चैव शयनं च त्रिधा भवेत्।।

**स. १८.१७, ४६ ; अ. ९ ; क्रि. ५.७४ ; वि. १९.९१**

### ४.१५.२ स्थानकादिध्रुवबेराणां सात्त्विकत्वादिविवेकः

**अ. १२**

सात्त्विकं स्थानकं कुर्यात् राजसं चासनं भवेत्।
तामसं शयनं प्रोक्तं त्रिविधं तु समाचरेत्।।

### ४.१५.३ स्थानकादिध्रुवबेराणां फलम्

**स. २०.४१, ४२**

सर्वाभ्युदयधर्मार्थी स्थानकं सम्यगाचरेत्।।
सुप्रतिष्ठार्थकामार्थी कारयेदासनं बुधः।
अविनाशनमोक्षार्थी शयनं परिकल्पयेत्।।

### ४.१५.४ स्थानकादिध्रुवबेराणां प्रत्येकं चातुर्विध्यं योगादिभेदेन

**क्रि. ५.७५**

चतुर्विधं [1]तदेकैकं योगं भोगं तथैव च।

---

1 स्थानकादित्रिविधध्रुवबेरम्।

वीरं च विरहं चैव ----------------।।

**अ. ९**

भवत्यपि चतुर्धा तु योगभोगाद्यपि[1] क्रमात्।

विरहं चेति----------------------

**वि. १९.९१**

[ अत्र विरहस्थाने आभिचारिकं निर्दिश्यत इति विशेषः। ]

**ज्ञा. ५४. ९५**

[ध्रुवबेरस्यैवैष[2] भेदो न तु कौतुकबिम्बस्य इति निर्दिश्यत इति विशेषः। ]

**ज्ञा. ५३.९३**

[3] एतद्योगं भोगं विरहं वीरमिति चतुर्विधं भवति।

**प्र. ९.१७, १८**

स्थानं चतुर्विधं विन्द्यात् योगं भोगं तथैव च ।।

सृष्टिसंहार[4] इत्येषां -----------------।

**नि. १३.३१**

तदेकैकं[5] त्रिधा प्रोक्तं योगं भोगं तथैव च ।

वीरं च इति देवेशं कारयेत्तद्विधानतः।।

**खि. १२.१**

[अत्र विरहमनुक्त्वा योगभोगवीरविभेदतः त्रैविध्यमुच्यत इति विशेषः। ]

---

1 आदिपदार्थः अस्पष्टः। 2 योगभोगादिभेदः।

3 स्थानकादित्रिविधध्रुवबेरम्।

4 अत्र वीरविरहस्थाने सृष्टिसंहारावन्तर्भाव्य चातुर्विध्यमुच्यत इति विशेषः।

5 स्थानकादित्रिविधं ध्रुवबेरम् ।

**स. २०.१, २**

[ अत्र खिलाधिकारवत्। ]

**अ. ८**

[ अत्र स्थानकं तु त्रिधा प्रोक्तमित्येव निर्दिश्यत इति विशेषः। ]

**प्र. ९.२१**

आसनानां चतुर्भेदं पूर्वोक्तेन[1] क्रमेण तु।

**ज्ञा. ५३.९३**

तच्च[2] योगं सुखं भोगं वीरमिति चतुर्विधम्[3]।

**स. २०. १९**

योगं भोगं तथा वीरमासनं च त्रिधा विदुः[4]।

**खि. १२.२२**

**अ. ८**

[ अत्र आसनं तु त्रिधा भवेदित्येव निर्दिश्यत इति विशेषः। ]

**स. २०. २८**

योगं भोगं तथा वीरं शयनं च त्रिधा भवेत्।

**ज्ञा. ५३.९४ ; १२. ४२**

**अ. ८**

[ अत्र वीरेत्यस्य स्थाने विरहेति निर्दिश्यत इति विशेषः। ]

---

1 स्थानके योगभोगसृष्टिसंहाराश्चत्वारो भेदाः तद्वदिहापि। 2आसनम्।

3.अत्र सुखमन्तर्भाव्य चातुर्विध्यमुच्यत इति विशेषः।

4.अत्र विरहध्रुवबेरमनुकृत्वा योग-भोग-वीरेति त्रैविध्यमुच्यत इति विशेषः।

### ४.१५.५ स्थानकादिध्रुवबेरभेदस्य योगस्य फलम्

**वि. १९.९१**

योगार्थं योगमार्गम्[1]

**स. २०.४३**

**अ. ८ ;**

ज्ञानार्थी योगमेवार्चेत् ------------।

---------------------------

मोक्षार्थी योगमेवोक्तं-------------।

### ४.१५.६ स्थानकादिध्रुवबेरभेदस्य भोगस्य फलम्

**स. २०.४३**

---------------भोगार्थी भोगमार्गकम्[2] ।

**वि. १९. ९१ ; अ. ८**

**ज्ञा. ५३. ९५**

[ धनैश्वर्यभोगार्थी भोगमार्गं कारयेदिति निर्दिश्यत इति विशेषः। ]

### ४.१५.७ स्थानकादिध्रुवबेरभेदस्य वीरस्य फलम्

**स. २०.४३**

वीर्यार्थी वीरमार्गं च-----------।

**वि. १९.९१ ; ज्ञा. ५३. ९५**

---

1 कारयेदित्यग्रिमेणान्वयः। 2 आचरेदित्युत्तरेणान्वयः।

### ४.१५.८ स्थानकादिध्रुवबेरभेदस्य विरहस्य फलम्

**स. २०.४३**

वीर्यार्थी ---------- वीरहं [1] मार्गमाचरेत्।।

**अ. ८**

मोक्षार्थी विरहम् ------------।

**ज्ञा. ५३ . ९५**

विरहार्थी विरहमार्गं --------- कारयेत्।

### ४.१५.९ स्थानकादिध्रुवबेरभेदस्य आभिचारिकस्य फलम्

**वि. १९.९१**

शत्रुजयार्थमाभिचारिकं कारयेत्।

### ४.१५.१० आसनध्रुवबेरभेदस्य सुखस्य फलम्

**ज्ञा. ५३.९५**

पुत्रार्थी च सुखार्थी च सुखमार्गम् ------------- कारयेत्।

### ४.१५.११ योगस्थानकध्रुवबेरस्य स्वरूपम्

**स. २०.२ - ९**

कारयेत्तु विधानेन देवदेवं चतुर्भुजम्।।

हस्तं च दक्षिणं पूर्वमभयं वरदं तु वा।
हस्तं चापि तथा वामं पूर्वं कट्यवलम्बितम्।।

दक्षिणापरहस्तेन चक्रं सम्यक् प्रगृह्य च।
वामेनापरहस्तेन शङ्खमुद्धृत्य सुस्थितम्।।

---

1 अत्र विरहं वीरहमित्युच्यत इति विशेषः।

सौम्यदृष्टिसमायुक्तं सर्वदेवनमस्कृतम्।
श्रिया देव्या च भूदेव्या रहितं योगसंज्ञकम्।।

देवदेवं च कृत्वा तु दक्षिणे भृगुमर्चकम्।
मार्कण्डेयं तथा वामे पुष्पाञ्जलियुतं मुनिम्।।

एकजानुसमासीनं देवं वीक्ष्यार्चनोद्यतम्।
सौम्यवेषसमायुक्तं कारयेत विधानतः।।

कुड्यकौतुकयोर्मध्ये मुन्योः स्थानकमुच्यते।
भृगुपुण्यार्चितं यत्तद्योगस्थानमुदाहृतम्।।

भूमिपुण्यार्चितं कैश्चिद्योगस्थानमुदीरितिम्।
तत्र दक्षिणतो भूमिं वामे पुण्यं च कारयेत्।।

**ज्ञा. ५३ - ९३**

श्रीभूमिभ्यां रहितं दक्षिणे मुनिना मार्कण्डेयेन अर्चकेन वामे च भृगुणा सहितं दक्षिणे भूम्या वामे मार्कण्डेयेनार्चकेन सहितं वा योगस्थानकं तथा देवीभ्यां रहितम् अर्चकेन मार्कण्डेयेन भृगुणा च सहितं दक्षिणे दण्डकेन वामे च गरुडेन युतं योगस्थानकमिति केचित्।

**अ. ८**

पद्मपीठस्थितं देवं चतुर्बाहुसमायुतम्।।

वरदं दक्षिणं पूर्वं वामं चोरुसमाश्रितम्।
परहस्तं चरेच्चक्रं वामे शङ्खं च धारयेत्।।

किरीटाङ्गदकेयूरहारं मकरसंयुतम्।
पीताम्बरं प्रलम्बं च उत्तरीयोपवीतकम्।।

अर्चनापीठपार्श्वे तु पुराणं दक्षिणेऽर्चयेत्।
वामे महीं समभ्यर्च्य योगस्थानकमुच्यते।।

---

योगमार्गं प्रवक्ष्यामि शिलाया ध्रुवमानतः।।

बेरं सलक्षणं कृत्वा ब्राह्मे वान्यपदेऽपि वा ।
दक्षिणे च पुराणे च वामे भूमिसमायुतम्।।

संस्थापयेद्यथामार्गं स्थानके योगमेव तत्।
विनैव भूमिपुण्याभ्यां केवलं देवमेव च।।

योगस्थानकमेतद्वैं वास्तुबाह्ये समर्चयेत्।

---

योगस्थानकमेवोक्तं पद्मपीठे स्थितं भवेत्।
अभयं दक्षिणं हस्तं वामं चोरुसमाश्रितम्।।

परे च दक्षिणे चक्रं वामे शङ्खं च धारयेत्।
सर्वाभरणसंयुक्तं सर्वलक्षणसंयुतम्।।

अर्चनापीठपार्श्वे तु मार्कण्डेयं तु दक्षिणे।
वामे वसुन्धरां चैव अर्चयित्वा यथाक्रमम्।।

चन्द्रादित्यौ नमस्कृत्य सनकादिनमस्कृतम्।

**क्रि. ५.७६**

[अत्र चक्रशङ्खधरं देवं योगं प्रकल्पयेदित्येव निर्दिश्यत इति विशेषः।]

**खि. १२.२ - १०**

दैविकं तु त्रिधा कृत्वा तेषु भागेषु पूर्वतः।

भागौ द्वावेकभागं वा व्यपोह्यैव तु पश्चिमे।।
भागे संस्थापयेद् बिम्बं स्थानकं तु सुलक्षणम्।
चतुर्भुजं तु कृत्वा वै दशतालेन मानतः।।
सर्वाभरणसंयुक्तं शङ्खचक्रसमन्वितम्।
सस्यश्यामनिभं कुर्यात्पीताम्बरसमन्वितम्।।
महीं दक्षिणतः कुर्यादेकजानुक्रमेण वै।
पुष्पाञ्जलिसमायुक्तामानमन्तीं सदाऽऽदरात्।।
श्यामवर्णां महीं कुर्यात् पुष्पाम्बरसमन्विताम्।
वामे पुराणं कुर्वीत एकजानुक्रमेण हि।।
पुराणं च प्रवालाभं जटामण्डलमण्डितम्।
अक्षमालासमायुक्तं पुष्पाञ्जलिसमन्वितम्।।
देवदेवं समीक्ष्यैव नित्यं भक्तिसमन्वितम्।
कुड्यकौतुकयोर्मध्ये इडापुण्यौ समर्चयेत्।।
दक्षिणां भित्तिमाश्रित्य ब्रह्माणं चैव लेखयेत्।
शङ्करं लेखयेद्वामे तत्तद्वर्णसमायुतम्।।
योगस्थानकमुद्दिष्टमेवं कुर्यात् विधानतः।

**नि. १३**

ऋज्वायतसमायुक्तं पद्मपीठोपरि स्थितम्।
चतुर्भुजसमायुक्तं सर्वाभरणभूषितम्।।
पूर्वं दक्षिणहस्तं तु वरदं वाभयं तु वा।

वामहस्तं तथा कट्यामूरौ वामावलम्बितौ।।

व (प ?) राभ्यां च कराभ्यां चक्रशङ्खौ च सन्धरेत्।
अर्चकोटिदिनयोर्मध्ये ? दक्षिणे मां[1] विशेषतः।।

कल्पयेदुत्तरे पुण्यं जटामकुटमण्डितम्।
सा द्विकेन ? समायुक्तं पुष्पाञ्जलिसमायुतम्।।

वामे वा दक्षिणे जानुरन्यं वामं तथैव च।
अवगोस्पर्शयित्वान्यं पादमुत्क (त्कु ?) टिकासनम्।।

एकं जान्वासनं चैव मुनिभिः परिकीर्तितम्।
वन्दितं सर्वदेवैस्तु श्रीभूम्यन्तर्हितं[2] बुधः।।

अथवा भूमिपुण्याभ्यामर्चितं वा विशेषतः।
योगस्थानकमित्युक्तं ब्रह्मणा परमेष्ठिना।।

## ४.१५.१२ उत्तमयोगस्थानकध्रुवबेरस्य स्वरूपम्

**य. १५.१ - ७**

अथातः स्थानकादीनां भेदं वक्ष्ये यथाक्रमम्।
श्यामलाङ्गं चतुर्बाहुं शङ्खचक्रधरं प्रभुम्।।

अभयं दक्षिणं हस्तं वरदं स्वागतं तु वा।
वामं च सिंहकर्णं वा कट्यालम्बितमेव वा।।

एकजानुसमासीनं दक्षिणे च भृगुं तथा।
मार्कण्डेयं तथा वामे भूमिपुण्यार्चितं तु वा।।

सकलं चाभासकं वाथ भूमिपुण्यौ च पूजकौ।

---

1भृगुमित्यर्थः। 2 श्रीभूभ्यां वर्जितम्।

सकलं तत्तद्रव्येण वर्णेनान्यं सुलेखयेत्।।

दक्षिणे भित्तिपार्श्वे तु हेमाभं चोत्तरामुखम्।
ब्रह्माणं च चतुर्बाहुमक्षमालां कमण्डलुम्।।

अभयं तु करं पूर्वं वामं कट्यवलम्बितम्।
श्वेताभं शङ्करं वामे चतुर्बाहुं जटाधरम्।।

मृगं च परशुं चान्यमभयं कट्यवलम्बितम्।
दक्षिणाभिमुखं प्रोक्तं कारयेदुत्तमं बुधः।।

**वि. १९.९२, ९३**

### ४.१५.१३ मध्यमयोगस्थानकध्रुवबेरस्य स्वरूपम्

**य. १५.८**

मुनिभ्यां[1] नैव मध्यं स्यात् ---------।।

**वि.१९.९३**

[2]ब्रह्मशङ्कराभ्यां हीनं मध्यमम्

### ४.१५.१४ अधमयोगस्थानकध्रुवबेरस्य स्वरूपम्

**य, १५. ८, ९**

------------ स्यादधमे तु विशेषतः।
मुनिभ्यां शङ्खचक्राभ्यामाचरेन्नैव सर्वदा।।

तथा[3] हीने -------------------।

---

1 उत्तमयोगस्थानकोक्तपरिवारे भृगुमार्कण्डेयाभ्यां मुनिभ्यां विरहितम्।

2 उत्तमयोगस्थानकोक्तपरिवारे इति प्रकरणाल्लभ्यते।

3 उत्तमयोगस्थानकोक्तपरिवारे भृगुमार्कण्डेयाभ्यां मुनिभ्यां विरहितं शङ्खचक्रविरहितं च देवेशं अधमयोगस्थानकं जानीयात्।

**वि.१९. ९३**

पूजकमुनिभ्यां[1] हीनम् अधमम्

**४.१५.१५ भोगस्थानकध्रुवबेरस्य स्वरूपम्**

**स. २०.१० - १६**

पद्मं वामेन हस्तेन गृहीत्वान्यं प्रसार्य च ।
देवं किञ्चित् समीक्ष्यैव विस्मयोत्फुल्ललोचनाम्।।

देवस्य दक्षिणे पार्श्वे श्रियं देवीं तथैव च ।
दक्षिणेनैव हस्तेन गृहीत्वा फुल्लमुत्पलम्।।

हस्तं वामं प्रसार्यैव पश्यन्तीमीषदच्युतम्।
वामपार्श्वे महीं देवीं विधानेनैव कारयेत्।।

बाहुप्रमाणं देवस्य देव्योर्मानमुदाहृतम्।
भृगुं च दक्षिणे कुर्यात् वामे पुण्यमुनिं तथा।।

एकजानुसमासीनौ कारयेदर्चकौ तथा।
एवं देवीसमायुक्तं भोगस्थानकमुच्यते।।
दण्डकं दक्षिणे कुर्याद्वामे पुण्यमुनिं तथा।
एकजानुसमासीनं देवमुद्वीक्ष्य सुस्थितम्।।

गरुडं च तथा वामे देवमुद्वीक्ष्य सुस्थितम्।
भोगस्थानकमित्येतत् केचिदाहुर्मनीषिणः।।

**ज्ञा . ५३ - ९३**

[2]तथा देवीभ्यामर्चकमुनिभ्यां च संयुतं भोगस्थानकम्।

---

1.उत्तमयोगस्थानकोक्तपरिवारे पूजकमुनिभ्यां (भृगुमार्कण्डेयाभ्यां)रहितम्।

2. योगस्थानकोक्तातिरिक्ततया।

**अ. ८**

भोगस्थानकमेवोक्तं वरदं पूर्वदक्षिणम्।
वामं कटिकहस्तं च ऊरौ चेति प्रभास्करम्।।

शङ्खचक्रधरं देवं चतुर्बाहुसमायुतम्।
वस्त्राभरणसंयुक्तं पद्मपीठे स्थितं भवेत्।।

श्रीदेवी दक्षिणे स्यात् मही वामे स्थिता भवेत्।
अर्चनापीठपार्श्वे तु मार्कण्डेयं च मां[1] तथा।
चन्द्रादित्यौ नमस्कृत्य सनकादिनमस्कृतम्।।

मायां संह्लादिनीं चैव चामराधारसंस्थिते।
कल्पवृक्षसमायुक्तं चक्रं चोपरि विन्यसेत्।।
---------------- भोगस्थानकमुच्यते।।

पद्मपीठस्थितं देवं वरदं हस्तमेव च।
वरदं दक्षिणं हस्तं वामं चोरुस्थितं भवेत्।।

शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।
श्रीदेवीं दक्षिणे स्थित्वा भवेद्वामे महीं तथा।।
दैविके मानुषे चैव भोगमेव ध्रुवार्चनम्।
----------------------------
----------------------------
स्थापयेद्वरदं नित्यं भुक्तिमुक्तिफलप्रदम्।।
ग्रामादौ स्थापनं ( स्थानकं ) कुर्याद् भोगमार्गं प्रकल्पयेत्।।

देवेशं दैविके स्थाप्य चतुर्भुजसमायुतम्।

वरदं दक्षिणे पूर्वं वामं चोरुसमाश्रितम्।।

शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।
पीताम्बरसमायुक्तं परं कल्पद्रुमं भवेत्।।

देवेशोभयपार्श्वे तु श्रीदेवीं दक्षिणे स्थिताम्।
वामे वसुन्धरां स्थित्वा चन्द्रादित्यौ नमस्कृतौ।।

अर्चनापीठपार्श्वे तु मार्कण्डेयं च दक्षिणे।
वामे तु मां[1] समभ्यर्च्य सनकादिनमस्कृताम्।।

चामरं धारयेद्देवीं मायां संह्लादिनीं स्थिताम्।

**क्रि. ५.७६**

[अत्र चक्रशङ्खधरं देवं भोगं प्रकल्पयेदित्येव निर्दिश्यत इति विशेषः। ]

**खि. १२. १० - १९**

दैविकं च त्रिधा कृत्वा भागौ द्वौ पूर्वतस्त्यजेत्।।

स्थापयेत्पश्चिमे भागे दशतालेन मानतः।
सर्वाभरणसंयुक्तं शङ्खचक्रसमन्वितम्।।
श्यामलाङ्गं चतुर्बाहुं ----- चतुर्विधम्।
एवं बिम्बं च कृत्वा तु सर्वालङ्कारसंयुतम्।।

श्रीदेवीं दक्षिणे कुर्यात् प्रवालद्युतिशोभिताम्।
सुस्थितं दक्षिणं पादं वामं पादं तु कुञ्चितम्।।

पद्मं दक्षिणहस्ते तु वामं सम्यक् प्रसार्य च ।
किञ्चिद्देवं समीक्ष्यैव विस्मयोत्फुल्ललोचनाम्।।

महीं वामे प्रकुर्वीत पुष्पाञ्जलिसमन्विताम्।
पुष्पं वामे तु सङ्गृह्य दक्षिणं सम्प्रसार्य च ।।

सुस्थितं वामपादं च दक्षिणं कुञ्चितं चरेत्।
देवेशकुड्ययोर्मध्ये श्रीभूम्योः स्थानमुच्यते।।

किञ्चित् पश्चिममाश्रित्य देव्यौ ते स्थापयेदुभे।
पुराणं दक्षिणे कुर्यादेकजानुक्रमेण ह ।।

भृगुं वामे प्रकुर्वीत पुष्पाञ्जलिसमन्वितम्।
यद्वा दक्षिणतः कुर्यात् वामे पुण्यं प्रकल्पयेत्।।

कुड्यकौतुकयोर्मध्ये मुनिस्थानमुदाहृतम्।
एवमेव विधानेन भोगस्थानकमीरितम्।।

**नि. १३**

देवेशं पूर्ववत्कृत्वा देव्यौ दक्षिणवामयोः।
आरुह्य दक्षिणं पादं वामपादं तु सुस्थितम्।।

आभङ्गेन समायुक्तां देवमीषत्समीक्षिताम्।
दक्षिणेन करेणैव गृहीत्वा फुल्लमम्बुजम्।।

वामहस्तं प्रसार्यैव सर्वाभरणसंयुताम्।
सुस्थितां शोभनां सौम्यां पद्मपत्रदलेक्षणाम्।।

कल्पयेत्तां श्रियं देवीं 'महीं देवीं' विशेषतः।
वामपादं तथाऽऽकुञ्च्य दक्षिणं सुस्थितं तथा।।

प्रसार्य दक्षिणं हस्तमितरेण करेण तु।
गृहीत्वोत्पलमुत्फुल्लं भोगादिनियते तथा।।

एकजानुसमासीनौ कल्पयेदर्चकं बुधः।
ब्रह्माणं दक्षिणे भित्तौ उत्तरे शङ्करं बुधः।।

हाहा हूहूश्च गन्धर्वौ गायन्तौ वेणुना बुधः।
तुम्बुरुं नारदं चैव वीणाहस्तसमन्वितम्।।

किन्नरेण समायुक्तं कल्पयेन्नर्तनं बुधः।
सनकं सनत्कुमारं पारिजातसमन्वितम्।।

छत्रोपरि समायुक्तमेतद् भोगसमायुतम्।
दण्डकं दक्षिणे चैव वामे वीशं तथैव च ।।

देवदेवं समीक्ष्यैव सुस्थितं पार्श्वयोरपि।
कल्पयेत्केवलं चेत्तत् भोगस्थानं तु वा बुधः।।

### ४.१५.१६ उत्तमभोगस्थानकध्रुवबेरस्य स्वरूपम्
### वि. १९. ९३, ९४

देवं चतुर्भुजं श्यामाभं शङ्खचक्रधरं अभयवरददक्षिणहस्तं कट्यवलम्बित-सिंहकण्ठ (कर्ण) वामहस्तं, तथा ब्रह्मेशौ दक्षिणे श्रियं देवीं रुक्माभां सुस्थिरदक्षिणपादां धृतकमलदक्षिणहस्तां प्रसारितवामकरां देवं किञ्चित् समीक्ष्य स्थितां वामे हरिणीं श्यामाभां प्रसारितदक्षिणहस्तां धृतोत्पलवामहस्तां संस्थितवामपादां किञ्चित् कुञ्चितदक्षिणपादां देवं किञ्चित् समीक्ष्य स्थितां कारयेत्। देव्योर्हस्तपादौ विपरीतौ वा कारयेत्।

कुड्यकौतुकयोर्मध्ये दक्षिणे भृगुं दक्षिणेन जानुनासीनं वामेनोत्कटिकमासीनं सपद्मवामहस्तं दक्षिणोरुनिहितदक्षिणकरं वामे पुराणं वामेन जानुनासीनं दक्षिणेनोत्कटिकमासीनं सपद्मदक्षिणहस्तं वामोरुविन्यस्तवामकरं

कारयेत्।एवमासयित्वा हस्तौ सम्पुटौ वा कारयेत्। भित्त्यूर्ध्वभागे मायासंह्लादिनीभ्यां व्याजिनीभ्यां तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां युक्तम् उत्तमं भोगस्थानकम्।

**य. १५.९ - १७**

----------- द्वितीये च ब्रह्मेशौ च तथैव च।
स्वर्णाभां दक्षिणे लक्ष्मीं दक्षिणं चरणं स्थितम्।।

वामं च कुञ्चितं किञ्चित्कमलं दक्षिणे करे।
वामं प्रसारितं हस्तं किञ्चिद्देवनिरीक्षणाम्।।

श्यामाभामुत्तरे पौष्णीमुत्पलं दक्षिणे करे।
धृतिं प्रासारितं वामपादं वै चोत्तरे स्थितम्।।

अन्यं तत्कुञ्चितं किञ्चिद्विस्मयोत्फुल्ललोचनाम्।
कारयेद्विपरीतं च दक्षिणोत्तरयोरपि।।

कुड्यकौतुकयोर्माध्ये दक्षिणे च भृगुं तथा।
एकजान्वा समासीनं वाममुत्कटिकं तथा।।

वामहस्तं सपद्मं च ऊरुन्यस्तं तथाऽन्यकम्।
उत्कटिकं दक्षिणं पादं पुरा वामे तथाऽन्यके।।

एवमेवासयित्वा तौ पूजकौ साञ्जलीपुटौ।
ब्रह्मेशयोस्तथा प्राच्यामाभासं वाथ कारयेत्।।

मायासंह्लादिनीभ्यां चोपरि भित्त्यूर्ध्वपार्श्वयोः।

तुम्बुरुं नारदं चैव किन्नरं मिथुनं तथा।।
यक्षविद्याधरं चैव सनकं च सनातनम्।
आदित्यं चैव चन्द्रं च सार्धं तच्चोत्तमं विदुः।।

### ४.१५.१७ मध्यमभोगस्थानकध्रुवबेरस्य स्वरूपम्

**वि. १९.९४**

[1]तुम्बुरुनारदाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम्।

**य.१५.१८**

### ४.१५.१८ अधमभोगस्थानकध्रुवबेरस्य स्वरूपम्

**वि .१९.९४**

सनकसनत्कुमाराभ्यामादित्यचन्द्राभ्यां पूजकमुनिभ्यां हीन-[2]
मधमम्[3] ।

**य १५.१८**

### ४.१५.१९ वीरस्थानकध्रुवबेरस्य स्वरूपम्

**खि. १२.२०, २१**

सर्वं दैविकमाश्रित्य स्थापयेत्तु विधानतः।
देव्यौ मुनी वर्जयित्वा देवेशस्तत्र शिष्यते।।
वीरमेवं प्रकुर्वीत सर्वाभरणसंयुतम्।
शङ्खचक्रे विना कुर्यादथवा तदलङ्कृतम्।।

---

1 उत्तमभोगस्थानकोक्तपरिवारे इत्यध्याह्रियते।

2 सनकादिहीनं शिष्टमुत्तमवदित्यर्थः। 3 भोगस्थानकमित्यध्याहारः।

## ४.१५.२० उत्तमवीरस्थानकध्रुवबेरस्य स्वरूपम्

**वि. १९.९४**

देवं श्यामाभं चतुर्भुजं शङ्खचक्रधरं कारयेत्। दक्षिणवामयोः ब्रह्मेशानाभ्यां भृगुपुण्याभ्यां किष्किन्धसुन्दराभ्यां व्याजकाभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां युक्तमुत्तमं वीरस्थानकम्।

**य. १५.१९, २०**

## ४.१५.२१ मध्यमवीरस्थानकध्रुवबेरस्य स्वरूपम्

**वि. १९.९४**

[1]किष्किन्धसुन्दराभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमम्।

**य .१५.२०**

## ४.१५.२२ अधमवीरस्थानकध्रुवबेरस्य स्वरूपम्

**वि.१९.९४**

आदित्यचन्द्राभ्यां पूजकक्षिति (मुनि) भ्यां हीनम् अधमम्।

**य. १५ . २१**

## ४.१५.२३ विरहस्थानकध्रुवबेरस्य स्वरूपम्

**स. २०.१७, १८**

श्रीभूमिभ्यां मुनिभ्यां च रहितं वीरहं विदुः।
रहितं शङ्खचक्राभ्यां केवलं देवमेव वा।।

देवीभ्यां रहितं चापि भूमिपुण्यार्चनायुतम्।
कैश्चिद्विरहमित्युक्तं --------------।।

---

1उत्तमवीरस्थानकोक्तपरिवारे इत्यध्याह्रियते।

**ज्ञा. ५३.९३**

[1]एतैस्सर्वैश्च विरहितं विरहस्थानकम्

**अ. ८**

स्थानकं विरहं प्रोक्तं देवीभ्यां च समायुतम्।
अभयं पूर्वहस्तं तु वामं चोरुसमाश्रितम्।।

मकुटादिपूर्वमेवोक्तं शङ्खचक्रविवर्जितम्।
अर्चनापीठपार्श्वे तु पुराणं दक्षिणेऽर्चयेत्।।

देवानन्यान् विना कुर्यात् स्थानकत्रयमार्गतः।।

--------------------------------

--------------------------------

स्थानकं विरहं चाथ चतुर्भुजसमायुतम्।
अभयं सिंहकर्णं च शङ्खचक्रविवर्जितम्।।

स्थापयेत् सर्वदादौ तु -----------।

----------------------------

----------------------------

------ सर्वत्र विरहं स्थानकं भवेत्।।

**क्रि. ५.७७**

निरायुधं तथा देवं विरहं परिकल्पयेत्।

**नि. १४**

केवलं देवदेवेशं चतुर्भुजसमायुतम्।।

1 योगभोगोक्तैः मार्कण्डेयादिभिः।

रहितं चक्रशङ्खाभ्यां भूमिपुण्यौ समायुतौ।
एकजानुसमासीनौ पुष्पाञ्जलिसमायुतौ।।

एवं सङ्कल्पयित्वा तद्विरहस्थानकं[1] विदुः।

**य. १५.२१ - २३**

विरहस्थानकं देवं द्विभुजं धूम्रमम्बरम्।।

श्यामलं चैव शुक्लाङ्गमूर्ध्वदृष्टिं तमोगुणम्।
विमलाक्षं च ब्रह्मादिपदे पैशाचके तथा।।

स्थानकं विरहं देवमार्द्रादौ स्थापयेन्निशि।

### ४.१५.२४ आभिचारिकस्थानकध्रुवबेरस्य स्वरूपम्

**वि. १९.९४**

एवं द्विभुजं चतुर्भुजं वा धूम (म्र) वर्णं श्यामाम्बरं शुष्काङ्गं तमोगुणान्वितमूर्ध्वनेत्रं ब्रह्मादिदेवैर्विवर्जितं पैशाचपदस्थं आर्द्राद्यनुक्तनक्षत्रे शर्वर्यां चरराशौ स्थापितं विमानं च लक्षणहीनं कारयेत्। एतदाभिचारिकस्थानकं स्यात्।

### ४.१५.२५ योगासनध्रुवबेरस्य स्वरूपम्

**खि. १२.२३ - २७**

किञ्चिद्दैविकमाश्रित्य मानुषे चासनं चरेत्।
सिंहासनं समं कुर्यादुपधानेन संयुतम्।।

---

1 पूर्वं स्थानकादिभेदपरिगणने निरुक्ताधिकारे विरहस्य प्रस्तावो नास्ति। किन्त्वत्र तल्लक्षणोक्त्या तदुपलक्ष्यते।

प्रसार्य दक्षिणं पादं वाममाकुञ्चितं चरेत्।
स्वागतं दक्षिणं हस्तं वामं कट्यवलम्बितम्।।

शङ्खचक्रधरं कुर्यात् सर्वाभरणभूषितम्।
इलापुण्यार्चितं यत्तु योगासनमिहोच्यते।।

इलां च दक्षिणे कुर्यादेकजानुक्रमेण ह ।
वामे पुण्यं प्रकुर्वीत पुष्पाञ्जलिसमन्वितम्।।

स्थानं पूर्वोक्तमुद्दिष्टं योगासनविधावपि।

**अ. ८**

सिंहासनं च कृत्वा तु देवेशं मध्यमं भवेत् (?)।।

किरीटाङ्गदकेयूरहारं मकरसंयुतम्।
उत्तरीयोपवीतं च पीताम्बरसमन्वितम्।।

महीपुराणसंयुक्तं योगासनमिहोच्यते।

---------------------------

---------------------------

योगासनं च कृत्वा तु सिंहासनतलोपरि।।

वामपादं तु शयितं दक्षिणं पादलम्बितम्।
अभयं दक्षिणं हस्तं वामं चोरुसमाश्रितम्।।

अपरे शङ्खचक्रे तु चतुर्भुजसमायुतम्।
अर्चनापीठपार्श्वे तु पुण्यं भूमिं समर्चयेत्।।

चन्द्रादित्यौ नमस्कृत्य सनकादिनमस्कृतम्।

**स. २०.१९. २०**

सिंहासने समासीनं देवेशं कारयेत्ततः।।

श्रीभूमिभ्यां च रहितं भृगुपुण्यार्चितं तथा।
योगासनमिति प्रोक्तं भूमिपुण्यार्चितं तु वा।।

**ज्ञा. ५३.९३, ९४**

तथा देवीभ्यां रहितमर्चकमुनिभ्यां महीमार्कण्डेयाभ्यां मार्कण्डेयपुण्याभ्यां वा युक्तं योगासनम्।

**नि.१४**

सिंहासनं तु देवेशं सोपधानं विशेषतः।
सर्वालङ्कारसंयुक्तं नानारत्नोपशोभितम्।।

अभयं दक्षिणं वामं कट्या हारावलम्बितम्।
पराभ्यां च कराभ्यां च चक्रशङ्खौ धरेत् क्रमात्।।

आसनाद्दक्षिणं पादं पद्मपीठे प्रसार्य च ।
आसने वामपादं तु ब्राह्ममासनवत्कृतम्।।

भूमिपुण्यार्चितं यत्तत् योगासनमिति स्मृतम्।

## ४.१५.२६ उत्तमयोगासनध्रुवबेरस्य स्वरूपम्

**वि. १९.९५**

देवं श्वेताभं चतुर्भुजं पीतवाससं जटामौलिं श्वेतपद्मे समासीनम् ऊर्ध्वस्थ-दक्षिणपादम् अधस्ताद्वामपादम् अङ्कविन्यस्तवामकरं शङ्ख-चक्ररहितापरभुजं श्वेतवस्त्रोत्तरीयं सोपवीतं कुण्डलाङ्गदहाराद्याभरणान्वितम् ईषन्निमीलितलोचनं च भित्तिपार्श्वे दक्षिणे ब्रह्माणम्, उत्तरे शङ्करम् ऊर्ध्वभागे चन्द्रादित्यौ सनकसत्कुमारौ कौतुकाद्दक्षिणवामयोः भृगुमार्कण्डेयौ

तथा महीमार्कण्डेयौ वा कारयेत्। एतदुत्तमं योगासनम्।

**य. १५.२३ - २६**

योगासने तु श्वेताङ्गं पीतवस्त्रं चतुर्भुजम्।।

श्वेतपद्मासनासीनं ब्रह्मासनसमन्वितम्।
जटामौलिकरौ पश्चात्पल्लव(वं) न्यस्तमन्ययोः।।

शङ्खचक्रौ विना श्वेत ?सोत्तरीयोपवीतकम्।
कुण्डलाङ्गदहाराभ्यामुन्मीलोन्मीललोचनौ(नम्)।।

एवं योगासने देवं धात्राद्यैरष्टदैवतैः।
सार्धं योगे तु तच्छ्रेष्ठं-----------।।

### ४.१५.२७ मध्यमयोगासनस्य स्वरूपम्

**वि. १९.९५**

[1]चन्द्रादित्याभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमम्[2]

**य. १५.२६**

----------------- मध्यमं पूजकौ[3] विना।।

### ४.१५.२८ अधमयोगासनस्य स्वरूपम्

**वि. १९.९५**

भृगुमार्कण्डेयाभ्यां हीनम् अधमम्[4]।

**य. १५.२७**

चन्द्रादिभिश्चतुर्भिस्तु [5]विना योगासनेऽधमम्।

1.उत्तमयोगासनोक्तपरिवारे इत्यध्याह्रियते। 2. योगासनमिति प्रकरणाल्लभ्यते।

3. उत्तमयोगासनोक्तपरिवारे इत्यध्याह्रियते। 4. योगासनमिति प्रकरणाल्लभ्यते

5.उत्तमयोगासनोक्तपरिवारे इत्यध्याह्रियते।

## ४.१५.२९ सुखासनध्रुवबेरस्य स्वरूपम्

**ज्ञा. ५३.९४**

[1] देव्यर्चकमुनिभिर्विनाकृतं वा तथा देवीभ्यामर्चकमुनिभ्यां वा संयुक्तं सुखासनम्।

## ४.१५.३० भोगासनध्रुवबेरस्य स्वरूपम्

**स. २०. २१ - २५**

सिंहासने तथासीनं देवं देव्यौ सहासने।
आसने च तथा कृत्वा कारयेदर्चकौ मुनी।।

पृथक् पीठे कृते देव्यौ भोगहानिं प्रयच्छतः।
भित्तिपार्श्वे परे कुर्यात् सितचामरधारिणीम्।।

देवं वीक्ष्य स्थितां मायां दक्षिणे वामतः स्थिताम्।
संह्लादिनीं प्रकुर्वीत सितचामरधारिणीम्।।

किष्किन्धं सुन्दरं चाथ चामरं धारिणौ तथा।
दक्षिणोत्तरयोर्मूर्ध्नि न्यस्तपाणियुतावपि।।

आदित्यचन्द्रौ कुर्वीत भोगासनमिदं स्मृतम्।

**ज्ञा. ५३. ९४**

**अ. ८**

अभयं दक्षिणं पूर्वं वामं कटिकसंयुतम्।
वरदं दक्षिणे चक्रं वामे शङ्खं तु धारयेत्।।

अर्चनापीठपार्श्वे तु श्रीदेवीं दक्षिणेऽर्चयेत्।

---

1.योगासनोक्तपरिवारे इत्यनुवर्तते।

वामे ख्यातीशमत्रापि योगासनविधानतः।।

देवानन्यान् विना कुर्यात् कल्पद्रुमं विना भवेत्।
भोगासनमिति प्रोक्तं सिंहासनतलोपरि।।

-----------------------------

-----------------------------

तथा भोगासनं चैव सिंहासनतलोपरि।
मध्ये च देवदेवशं श्रीभूम्योश्च सहासनैः।।

भोगासनं ध्रुवार्चायां पूजयेदिष्टसिद्धये।

-----------------------------

-----------------------------

भोगासनक्रमं वक्ष्ये सिंहासनतलोपरि।।

देवेशं मध्यमे चैव चतुर्भुजसमायुतम्।
वरदं दक्षिणं हस्तं वामं चोरुस्थितं भवेत्।।

शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।
श्रीदेवीं दक्षिणे चैव महीं वामे समर्चयेत्।।

देवेशोभयपार्श्वे तु सिंहासनतलोपरि।
मायां संह्लादिनीं कुर्यात् चामरावीजसंयुतम्।।

प्रभां छत्रं च कृत्वा तु कल्पवृक्षसुशोभितम्।
कल्पयेदर्चनापीठे मार्कण्डेयं च [1]मां तथा।।

---

1मां भृगुमिति यावत्। भृगुवचनत्वात्।

**खि. १२. २७ - ३९**

श्रीभूमिसहितं कुर्याद्देवदेवं विशेषतः।।

श्रीदेवीं दक्षिणे कुर्यान्महीं वामे च कारयेत्।
प्रसार्य दक्षिणं पादं वाममाकुञ्चितं चरेत्।।

पद्मं दक्षिणहस्ते तु वामं कट्यवलम्बितम्।
किञ्चिद्देवं समीक्ष्यैव श्रीदेवीं चापि कारयेत्।।

वामं पादं प्रसार्यैव दक्षिणं कुञ्चितं चरेत्।
पद्मं वामे तु सङ्गृह्य देवदेवं समीक्ष्य वै।।

सिंहासने सहासीनं देवमुद्वीक्ष्य चादरात्।
आसीनामासने देवीं महीं कुर्याद्विचक्षणः।।
अन्तरं देवदेव्योस्स्यात् भागं तालं यवद्वयम्।
पृथगासने तथा कुर्यात् भोगभावो न सम्भवेत्।।

सिंहासनस्य पृष्ठे तु व्याजिन्यौ भद्रकाजये।
जयां च दक्षिणे कुर्याद्वामे चैव तु भद्रकाम्।।

जयाञ्च श्यामवर्णां तु पुष्पाम्बरधरां शुभाम् ।
हस्ते च दक्षिणे कुर्याच्चामरञ्च विशेषतः।।

रक्ताभा भद्रका चोक्ता पीताम्बरवरप्रिया।
चामरं वामहस्ते तु कुर्यादानम्य चादरात्।।

अथवा कारयेद्विद्वान् किष्किन्धं सुन्दरं क्रमात्।
किष्किन्धं दक्षिणे कुर्याद्वामे वै सुन्दरं चरेत्।।

सुन्दरं वामहस्ते तु धरन्तं चामरं शुभम्।
देवद्रुमं प्रकुर्वीत देवदेवस्य पृष्ठतः।।

नानापुष्पसमायुक्तं नानापल्लवसंयुतम्।
कारयित्वा विधानेन छत्रञ्चोपरि चन्द्रभम्।।

भित्तौ बाहूपरि लिखेत्प्रभामण्डलमन्तरा।
एवं [1]सुखासनं प्रोक्तं ब्रह्मणा परमेष्ठिना।।

**नि. १४**

[ अत्र सुन्दर इत्यस्य स्थाने मन्दर इति निर्दिश्यत इति विशेषः। ]

### ४.१५.३१ उत्तमभोगासनध्रुवबेरस्य स्वरूपम्

**वि. १९. ९५, ९६**

देवं सिंहासने समासीनं श्यामाङ्गं चतुर्भुजं शङ्खचक्रधरं अभयवरददक्षिणहस्तं स्वाङ्ककटिविन्यस्तसिंहकर्णवामहस्तं प्रसारितदक्षिणपादं कुञ्चितवामपादं दक्षिणे श्रियं देवीं वामपादमाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनां वामपार्श्वे महीं देवीं दक्षिणं पादमाकुञ्च्य वामं प्रसार्य सिंहासने समासीनां एतयोः वामदक्षिणकरौ पद्मोत्पलधरौ अन्यौ सिंहासने निहितौ सिंहकर्णौ वा तद्विपरीतौ वा देवदेव्योरन्तरभागं तालं यवद्वयं तत्तुरीयांशाधिकं हीनं वा दक्षिणोत्तरयोः ब्रह्मशङ्करौ तथासीनौ भृगुमार्कण्डेयौ च एकजानुक्रमेणासीनौ अन्यत्सर्वं भोगस्थानकवत् अपरभित्तिपार्श्वे मायासंह्लादिनीभ्यां व्याजिनीभ्यां तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्याम् एवं क्रमेण समायुक्तम् उत्तमं भोगासनम्।

---

1 सुखासनपदं भोगासनपरम्।

**य. १५.२७ - ३४**

[ अत्र कल्पद्रुमसंयुतमित्यधिकमिति विशेषः। ]

### ४.१५.३२ मध्यमभोगासनध्रुवबेरस्य स्वरूपम्

**वि. १९.९६**

[1]तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां हीनं [2]मध्यमम्।

### ४.१५.३३ अधमभोगासनध्रुवबेरस्य स्वरूपम्

**वि. १९. ९६**

सनकसनत्कुमाराभ्याम् आदित्यचन्द्राभ्यां पूजकमुनिभ्यां हीन-[3] मधमम्।

**य. १५. ३४ - ३६**

तथैव देवदेवेशं स्थाने वै पूजकावृषी।।

तथासीनौ धृतिं पौष्णीं पूजनार्थं सुकल्पयेत्।
ब्रह्माणं शङ्करादींश्च मन्वन्तं (?) पूजकावृषी।।

सनकाद्यष्टभिर्देवैस्सार्धं वीरासने गुरुः।
ब्रह्मादिसनकान्ताष्षडन्तरं चैव कन्यसम् [4]।।

---

1 उत्तमभोगासनोक्तपरिवारे इत्यध्याहियते। 2 भोगासनमिति प्रकरणाल्लभ्यते।
3 भोगसनमिति प्रकरणाल्लभ्यते। 4 भोगसनमिति प्रकरणाल्लभ्यते।

## ४.१५.३४ वीरासनध्रुवबेरस्य स्वरूपम्

**ज्ञा. ५३. ९४**

देव्यर्चकमुनिभिः सहितं रहितं वा देवस्य पादयोरूरुबद्धवस्त्रेण युतं जानूपरि विन्यस्तप्रसारितहस्तद्वयसहितं वीरासनम्। देवीभ्यां रहित-मर्चकमहीमार्कण्डेयसहितं वीरासनमित्येके।

**स. २०.२५ - २७**

**खि. १२. ४०, ४१**

[ अत्र वीरासनं नारसिंहस्य विशिष्यत इति, वीरासने दक्षिणपादस्य आकुञ्चनं, वामपादस्य प्रसारणं च निर्दिश्यत इति विशेषः। ]

**य. १५.३७, ३८**

देव्योस्तत्तद्विशेषेण वीरासनविधिक्रमम्।
तथा पैशाचमध्ये तु बेरं तद्वीरमासनम्।।

कल्पयित्वैव तं देवं स्थापयेद्रिपुरूर्ध्वदृक्।

## ४.१५.३५ उत्तमवीरासनध्रुवबेरस्य स्वरूपम्

**वि. १९ . ९६**

सिंहासनोपरिष्टात् पद्मासने वामपादं समाकुञ्च्य दक्षिणं किञ्चित् प्रसार्य समासीनं चतुर्भुजं शङ्खचक्रधरम् अभयदक्षिणहस्तं सिंहकर्णवामहस्तं प्रवालाभं श्यामाम्बरधरं पूजकस्थाने दक्षिणे श्रियं देवीं वामे महीं देवीमेकजानुक्रमेणासीने दक्षिणे ब्रह्माणं मनुं च वामे शङ्करं भृगुं च रतिं वाणीं च चामरधारिण्यौ च कारयेत्। सनकसनत्कुमाराभ्यां तुम्बुरुनारदाभ्यां सहितम् उत्तमं वीरासनम्।

## ४.१५.३६ मध्यमवीरासनध्रुवबेरस्य स्वरूपम्

### वि. १९.९६

[1]तुम्बुरुनारदाभ्यां सनकसनत्कुमाराभ्यां व्याजिनीभ्यां हीनं मध्यमम्[2]

## ४.१५.३७ अधमवीरासनध्रुवबेरस्य स्वरूपम्

### वि. १९.९६

[3]ब्रह्मशङ्कराभ्यां सूर्यचन्द्राभ्यां पूजकस्थाने देवीभ्यां [4]हीनमधमम्।

## ४.१५.३८ विरहासनध्रुवबेरस्य स्वरूपम्

### अ. ८

देवेशं मध्यमे स्थाप्य देवीभ्यां च सहासने।।

श्रीदेवी दक्षिणे पार्श्वे वामे चैव मही भवेत्।
मौलादीनां च कृत्वा तु सर्वाभरणसंयुतम्।।

चतुर्भुजं च कृत्वा तु वरदं पूर्वदक्षिणे।
वामे कटिकहस्तं च किञ्चिदूरुसमाश्रितम्।।

हस्ते च दक्षिणे चक्रं वामे शङ्खं तु धारयेत्।
अर्चनापीठपार्श्वे तु मार्कण्डेयं च दक्षिणे।।

वामे वा मां समभ्यर्च्य चन्द्रादित्यनमस्कृतम्।
माया संह्लादिनी स्थित्वा परे सिंहासनस्य च ।।

---

1 उत्तमवीरासनोक्तपरिवारे इत्यध्याह्रियते। 2 वीरासनमित्यनुवर्तते।
3 उत्तमवीरासनोक्तपरिवारे इत्यध्याह्रियते। 4 वीरासनमित्यध्याह्रियते।

इन्द्रादीनां नमस्कृत्य सनकादिनमस्कृतम्।
कल्पवृक्षसमायुक्तं प्रभाचक्रं समाचरेत्।।

आसनं विरहं प्रोक्तं दैवं सिंहासनोपरि।
पूर्वोक्तविधिना कुर्यात् शङ्खचक्रविवर्जितम्।।

देवीभ्यां चान्यदेवानां वृक्षादीनां विवर्जयेत्।
अर्चनापीठपार्श्वे तु मार्कण्डेयं च दक्षिणे।।

मुनीनन्यान् विवर्ज्यैव त्रिविधा (विरहा ?)सनमुच्यते।।

**नि. १४**

आसनोपरि देवेशं श्रीभूमिरहितं बुधः।
पुष्पाञ्जलिसमायुक्तं भूमिपुण्यार्चितं तु यः।।

शेषं भोगवदुद्दिष्टं विरहासनमीरितम्।
अथवा चासनस्योर्ध्वे पादौ विन्यस्य वै बुधः।।

धृत्वा योऽसौ विशेषेण वस्त्रेणोरुरुबन्धयेत्।
हस्तौ जानूपरि न्यस्य आसीनं विरहं विदुः।।

## ४.१५.३९ आभिचारिकासनध्रुवबेरस्य स्वरूपम्

**वि. १९.९७**

देवं वेदिकासने समासीनं चतुर्भुजं द्विभुजं वा नीलाभं श्यामवस्त्रधरं तमोगुणान्वितमूर्ध्वनेत्रं देव्यादीन्विना लक्षणहीने विमाने शत्रुदिङ्मुखे कृष्णाष्टम्याम् अश्विन्याद्यनुक्तनक्षत्रे शर्वर्यां चरराशौ गर्भालये पैशाचपदे स्थापयेत्। एतदाभिचारिकासनं भवति।

### ४.१५.४० योगशयनध्रुवबेरस्वरूपम्

**खि. १२. ४५ - ६५**

शयनं सम्प्रकल्प्यैव सर्वाभरणभूषितम्।
सस्यश्यामनिभं कुर्यादनन्तोपरि शायिनम्।।

बेरायामं त्रिधा कृत्वा तत्रैकं शयनोच्छ्रयम्।
सव्यं हस्तं प्रसार्यैव प्रह्लादस्य शिरः स्थले।।

शयानं देवदेवेशं कुर्याद्योगाख्यशायने।
प्रह्लादं रक्तवर्णं च शयनस्य समं तथा।।

बालरूपं तथा कुर्यात् सर्वाभरणभूषितम्।
वामकूर्परमूर्ध्वं स्यात् नताङ्गुलिसमन्वितम्।।

स्वीयं कायं त्रिरावृत्य तल्पीकृत्य हरेर्मृदुम्।
फणान् पञ्च समुद्धृत्य प्रसार्य मकुटोपारि।।

पीतवर्णमथ श्वेतमनन्तं परिकल्पयेत्।
नाभ्यम्बुजे समासीनं ब्रह्माणं च प्रकल्पयेत्।।

बिम्बस्य च चतुर्भागमायतं कारयेद्विधिम्।
हिरण्यवर्णं ब्रह्माणं जटामकुटभूषितम्।।

सर्वाभरणसंयुक्तं पुष्पाम्बरसमन्वितम्।
चतुर्बाहुं पद्मभुवं धातारं चतुराननम्।।

कमण्डलुं वामहस्ते दक्षिणे चाक्षमालिकाम्।
सव्यमालोक्यवत्कुर्यात् वामं कट्यवलम्बितम्।।

ऊर्ध्वं पञ्चायुधानि स्युः भित्तिपार्श्वे विशेषतः।

कौमोदकीं तथा शाङ्‍र्गमसिं स्त्रीरूपमाचरेत्।।

चक्रं पुरुषवत् कुर्यात् शङ्खं भूताकृतिं चरेत्।
रक्तां कौमोदकीं कुर्यात् पीतं शाङ्‍र्गमुदाहृतम्।।

श्वेतवर्णमसिं कुर्यात् चक्रमग्निनिभं भवेत्।
किरीटमकुटोपेतं स्तनबन्धसमन्वितम्।।

तलप्रहारसमयद्रुतवेगसमन्वितम्।
एवंरूपाणि कार्याणि आयुधानि विशेषतः।।

उभौ कवचसंयुक्तौ शङ्खचक्रौ विशेषतः।
सर्वाभरणसंयुक्तावुग्ररूपौ च कारयेत्।।

वामपार्श्वे तथा कुर्यान्मधुं कैटभमेव च ।
समुद्रोद्धूतवेगेन जानुमात्रं समुद्रगौ।।

मधुश्च रक्तवर्णः स्यात्कैटभः श्यामलो मतः।
रक्तकेशौ दण्डवृक्षायुधसंधारिणावुभौ।।

वक्रदंष्ट्रौ त्रासहासयुतौ परमदारुणौ।
सर्वाभरणसंयुक्तं भीमरूपं भयानकम्।।

गरुडं दक्षिणे पार्श्वे प्राञ्जलिं सुस्थितं सितम्।
वामपार्श्वे तथा शान्तं तद्वर्णेनैव कारयेत्।।

इलापुण्यौ तथा कुर्यात् पूजकस्थानमाश्रितौ।
पुण्यं च दक्षिणे कुर्यात् वामे क्षोणीं च कारयेत्।।

नवतालक्रमेणैव एकजानुविधानतः।

पुष्पाञ्जलिसमायुक्तौ रक्तश्यामनिभावुभौ।।

एवं योगं समाख्यातम्-------------।

**स. २०.२८ - ३३**

ऊर्ध्वाननं शयानं च पादौ सम्यक् प्रसार्य च ।।

चतुर्हस्तं द्विहस्तं वा चक्रशङ्खौ विनैव च।
वामहस्तं प्रसार्यैव किञ्चिदुन्मील्य चक्षुषी।।

मकुटे दक्षिणं हस्तमुपधाने तु सन्न्यसेत्।
नाभिपद्मसमासीनं ब्रह्माणं पञ्च चायुधान्।।

भित्तिपार्श्वाश्रयान् कुर्यात्तत्तद्वर्णसमायुतान्।
पादपार्श्वे च भित्तौ च कारयेन्मधुकैटभौ।।

जानुमात्रसमुद्रस्थावुग्रवेगसमन्वितौ।
दह्यमानावनन्तस्य विषज्वालाभिरेव तौ।।

भूमिपुण्यार्चितं चैतच्छयनं योगमुच्यते।

**ज्ञा. ५३.९४**

[ अत्र अर्चकमहीमार्कण्डेयाभ्यां च सहितमित्यधिकमिति विशेषः। ]

**अ. ८**

द्विभुजं देवदेवेशं किञ्चिदुन्मील्य चक्षुषी।
उपधानं दक्षिणं हस्तं निहितं मकुटं तथा।।

प्रसारितं वामहस्तं तत्कृत्वा हस्तशयानकम्।
परभित्त्यूर्ध्वभागे तु ब्रह्मादीन् परिकल्पयेत्।।

नाभिपद्मे समासीनं ब्रह्माणं पूर्वमाचरेत्।
पञ्चायुधस्वरूपाणि परभित्त्याश्रितं भवेत्।।

मधुकैटभावुपरतौ पादपार्श्वस्थितावपि।
महीपुण्यार्चितं यच्च शयनं योगमुच्यते।।

----------------------------

----------------------------

योगशय्याक्रमं वक्ष्ये देवेशं शयनं भवेत्।
अनन्तशयनं देवं द्विभुजं च समाचरेत्।
सर्वाभरणसंयुक्तं पीताम्बरसमन्वितम्।।

अर्चनापीठपार्श्वे तु श्रीभूमिभ्यां समर्चयेत्।
मार्कण्डेयं भृगुं चैव देवीभ्यां च विनार्चितम्।।

देवेशस्य शिरः पार्श्वे गरुडं बन्धने स्थितम्।
पादपार्श्वे विषादग्नौ दाहयेन्मधुकैटभौ।।

विरिञ्चं नाभिपार्श्वे तु पद्मासनसमायुतम्।
अष्टावक्रमृषिं चैव तुम्बुरुं नारदं भवेत्।।

चन्द्रादित्यौ नमस्कृत्य पञ्चायुधसमायुतम्।
शङ्खचक्रधरं देवं सर्वाभरणभूषितम्।।

**नि. १४**

चतुर्हस्तं द्विहस्तं वा द्यानत्योर्ध्वे? विशेषतः।
रहितं शङ्खचक्राभ्यां देवेशं शयनं चरेत्।।

पूर्वं दक्षिणहस्तं वै प्रह्लादस्य शिरोपरि।
सन्न्यसेत्परहस्तौ तु सोपधाने न्यसेच्छिरः।।

वामं चोरू समाश्रित्य परहस्तं विशेषतः।
नाभेरुत्थितपद्मस्य नालं सङ्गृह्य युक्तितः।।

किञ्चिदुद्वारं समीक्ष्यैव देवमूर्ध्वाननं चरेत्।
पद्मोपरि समासीनं ब्रह्माणं चायुधानपि।।

भित्तिपार्श्वे प्रकुर्वीत पादपार्श्वे विशेषतः।
मधुकैटभसंयुक्तं देवस्यैव तु दक्षिणे।।

गरुडं प्राञ्जलिं कृत्वा सुस्थितं देवधीयुतम्।
पादपार्श्वेऽमितं चैव भूमिपुण्यार्चितं तथा।।

पुण्यं दक्षिणतः कुर्यात् महीं वामे विशेषतः।
योगनिद्रासमायुक्तं य (त ?)द्योगशयनं विदुः।।

## ४.१५.४१ उत्तमयोगशयनध्रुवबेरस्य स्वरूपम्

### वि. १९.९८

देवं द्विभुजम् अर्धार्धशयानं पीतश्यामं दक्षिणहस्तमुपधाने न्यस्य मौल्यग्रं समुद्धृत्य सम्यक् प्रसार्य वा अन्यं समाकुञ्च्य तत्कूर्परमूर्ध्वं कृत्वा कटिमवलम्ब्य अथ वा तदूरौ प्रसार्य वामपादं दक्षिणं प्रसार्य वाममाकुञ्च्य (वा) शयानं सर्वाभरणभूषितं किञ्चिदुन्मीलितलोचनं भृगुपुण्याभ्यां भूमिपुण्याभ्यां वाऽर्चितं पादपार्श्वे मधुकैटभसंयुक्तं च नाभ्यम्बुजसमासीनं ब्रह्माणं पञ्चायुधान् गरुडं विष्वक्सेनं सप्तर्षींश्च अपरभित्त्यूर्ध्वे प्राञ्जलीकृत्य स्थितान् दक्षिणभित्तिपार्श्वे ब्रह्माणं वामे शङ्करं च समासीनावेव कारयेत्।

एतदुत्तमं योगशयनम्।

**य. १६.१ - ८**

[अत्र श्यामाभम् इति देवविशेषणं, मधुकैटभविशेषणं च अधिके। अत्र गरुडविष्वक्सेनसप्तर्षीणां निर्देशो नास्तीति, उत्तमं योगशयनं सकलमर्धचित्रं वा कुर्यादिति निर्दिश्यत इति च विशेषः]

## ४.१५.४२ मध्यमयोगशयनध्रुवबेरस्य स्वरूपम्

**वि. १९.९८**

[1]सप्तर्षीन् विष्वक्सेनं च विना मध्यमम्।

**य . १६.८**

-------------- [2]ऋषिभ्याममितेन च ।

मध्यमं तु विना ------------------।।

## ४.१५.४३ अधमयोगशयनध्रुवबेरस्य स्वरूपम्

**वि. १९.९८**

[3]पूजकमुनिभ्यां मधुकैटभाभ्यां हीनमधमम्।

**य. १६.८**

--------------हीनं मधुकैटभवर्जितम्[4] ।।

---

1 उत्तमयोगशयनोक्तपरिवारे इत्यध्याह्रियते।

2 ,,

3 ,,

4 ,,

## ४.१५.४४ भोगशयनध्रुवबेरस्य स्वरूपम्

**अ. ८**

निरीक्षिताननं किञ्चित् उदारं तत्परं वरम्।
मकुटं सव्यहस्तेन घृतं वै राजवत्प्रभुम्।।

वामं प्रसारितं वाथ सिंहकर्णमथापि वा।
पादौ प्रसारितौ कुर्यात् देव्योरङ्के विशेषतः।।
द्विहस्तमर्दनं कुर्यात् श्रीभूम्योश्चैव पूर्ववत्।
सिंहासनगतोर्ध्वे तु गर्वितास्सुमुखाननाः।।

पञ्चायुधस्वरूपाणि ब्रह्मणा सह पण्डिताः।
एतद्वै भोगशयनं कुर्यादन्यानि पूर्ववत्[1] ।।

------------------------------

------------------------------

भोगशय्याक्रमं वक्ष्ये देवेशं शयनं भवेत्।
अनन्तशायिनं देवं देवीभ्यां पादपार्श्वतः।।

श्रीदेवीं दक्षिणे पार्श्वे वामपादान्तरे महीम्।
शयनोपरि देवेशं देवीभ्यां शयनासने।।

मौलिपार्श्वे स्थितं वीशं हृदयेऽञ्जलिसम्पुटम्।
इन्द्रवीन्द्रौ क्रमात्स्थित्वा पादपार्श्वे नमस्कृतम्।।

विरिञ्चनाभिपार्श्वे तु पद्मनाभसमायुतम्।
विरिञ्चस्योभयोः पार्श्वे आयुधं च प्रकल्पयेत्।।

1 योगशयनवदिति यावत् ।

मूलबेरं त्रिभागैकं चक्रस्यैकं तु मानतः।
सर्वाङ्गरक्तवर्णं च श्यामवस्त्रसमायुतम्।।

मौलिकेयूरहारं च सर्वाभरणभूषितम्।
शिरसा धारयेच्चक्रं पुष्पहस्तं नमस्कृतम्।।

स्त्रीरूपं शयामलाङ्गं च रक्तवस्त्रं च कारयेत्।
तस्य दक्षिणपार्श्वे तु असिं चैव तु सन्न्यसेत्।।

कनकाभं पीतवस्त्रं सर्वाभरणभूषितम्।
तस्य दक्षिणपार्श्वे तु गदां चैव प्रकल्पयेत्।।

रक्ताभं श्यामवस्त्रं च मकुटाद्यैर्विराजितम्।
तस्य दक्षिणपार्श्वे तु वज्रं चैव प्रकल्पयेत्।।

श्वेताभं श्यामवस्त्रं च मौल्यादिसर्वभूषणम्।
तस्य दक्षिणपार्श्वे तु शक्तिं चैव प्रकल्पयेत्।।

श्यामाभं पीतवस्त्रं च स्त्रीरूपं च प्रकल्पयेत्।
विरिञ्चस्य वामभागे तु शङ्खं चैव प्रकल्पयेत्।।

श्वेताभं श्यामवस्त्रं च मौल्यादिसर्वभूषणम्।
शङ्खस्य वामभागे तु शाङ्‌र्ग चैव प्रकल्पयेत्।।

स्त्रीरूपं कनकाभं च रक्तवस्त्रं सुयोजयेत्।
माल्यादिभूषणं सर्वं तदर्हं च समाचरेत्।।

शाङ्‌र्गस्य वामभागे तु स्त्रीरूपं मुसलं भवेत्।
श्यामलं रक्तवस्त्रं च पूर्वोक्तं भूषणं भवेत्।।

मुसलस्य वामभागे तु अङ्कुशं सम्प्रकल्पयेत्।
श्यामाङ्गं पीतवस्त्रं च पुंवेषं परिकल्पयेत्।।

माल्यादिभूषणं सर्वं पूर्वोक्तं विधिना भवेत्।
अङ्कुशस्य तु वामं स्यात् पाशं चैव प्रकल्पयेत्।।

स्त्रीरूपं रक्तवर्णं च श्यामवस्त्रसमायुतम्।
माल्यादिभूषणं सर्वं तदर्हं च समाचरेत्।।

चक्रस्यैव तु मानं स्यात् कोलकं चान्यहीनकम्।
चक्रं गदां च वज्रं च शङ्खं चाङ्कुशपञ्चमम्।।

शक्तिः खड्गं च पाशं च स्त्रीरूपं च त्रयं स्मृतम्।
नपुंसकद्वयं प्रोक्तं मुसलं शाङ्र्गमेव च ।।

पुष्पं चैकं नमस्कारं कटिं चैकं तु हस्तकम्।
आयुधानां दश चैव तद्रूपं शिरसा धरेत् ।।

नाभिसूत्रं च भक्तौ च पद्मपीठं प्रकल्पयेत्।
पद्ममध्ये समासीनं ब्रह्माणं सम्प्रकल्पयेत्।।

चतुर्भुजसमायुक्तं श्यामाम्बरसमायुतम्।
जटामकुटसंयुक्तं कमण्डल्वक्षधारिणम्।।

कनकाभं हारकेयूरहस्तावलयसंयुतम्।
श्यामोत्तरीयसंयुक्तं दशतालेन मानतः।।

मूलबेरस्य पञ्चांशे द्व्यंशं तु कमलोद्भवम्।
देवेशस्य तु मानं स्यात् दशतालेन मानतः।।

देवेशं शयनं कृत्वा किञ्चिद् द्वारं समीक्ष्य च ।

भूषणाम्बरवर्णं च पूर्वोक्तविधिना भवेत्।।

नाभिमानसमुत्सेधं श्रीभूम्योर्मानमुच्यते।
नवतालाधिकं भागं देवीभ्यां मानमाचरेत्।।

भूषणं वस्त्रवर्णं च पूर्वोक्तविधिना चरेत्।
मूलबिम्बार्धमानेन मार्कण्डेयं च मां तथा।।

अर्चनापीठपार्श्वे तु पुराणं दक्षिणेऽर्चयेत्।
वामे ख्यातीशमभ्यर्च्य एकजानुक्रमो भवेत्।।

पुराणं कनकाभं च ख्यातीशं तु प्रवालकम्।
पुराणं रक्तवस्त्रं च श्यामवस्त्रं भृगुं तथा।।

जटाबन्धं च कृत्वा तु पुष्पहस्तं समाचरेत्।
मूलबिम्बार्धमानेन गरुडं सम्प्रकल्पयेत्।।

कनकाभं च कृत्वा तु श्यामवस्त्रसमायुतम्।
मौलिकेयूरहारं च बाहुसर्पं सवासुकिम्।।

नासिकाश्याममेवोक्तं नवतालं समाचरेत्।
इन्द्रस्यैव तु मानं स्यात् नवतालार्धमानकम्।।

देवेशं वन्दमानं तु द्विभुजं श्याममेव च ।
किरीटाङ्गदकेयूरहारकुण्डलशोभितम्।।

पीताम्बरं प्रलम्बं च पुष्पहस्तनमस्कृतम्।
कनकाभां शचीं देवीं श्यामवस्त्रसमायुताम्।
मौलिकेयूरहारां च नानाभूषणालङ्कृताम्।।

पुष्पहस्तां च कृत्वा तु इन्द्रं दक्षिणतो भवेत्।
उपेन्द्रं कनकाभं च श्यामवस्त्रसमायुतम्।।

मौलिकेयूरहारं च पूर्वोक्तं मानमाचरेत्।
श्रीदेवीं दक्षिणे चैव वामे चैव वसुन्धराम्।।

श्रीदेवीं कनकाभां च श्यामवस्त्रसमायुताम्।
मकुटं च शिखाबन्धं स्तनबन्धं सुयोजयेत्।।

पद्मस्य मुकुलाकारं नानारत्नं च कुण्डलम्।
मौलिकेयूरहारं च नानाभूषणालङ्कृताम्।।

महीं देवीं श्यामवर्णां रक्तवस्त्रसमायुताम्।
मौलिकेयूरहारं च कुण्डलं मकरं भवेत्।।

स्तनं चैवावरोहं वा भूषणानामलङ्कृतम्।
विष्वक्सेनं च कृत्वा तु सिंहासनतलोपरि।।

शयितं दक्षिणं पादं वामपादं तु लम्बितम्।
रक्ताभं श्यामवस्त्रं च द्विभुजं च समाचरेत्।।

किरीटमकुटसंयुक्तं हारं मकरकुण्डलम्।
केयूरोदरबन्धं च सर्वाभरणभूषितम्।।

कारयेद्विष्वक्सेनं च पुत्रपौत्राभिवृद्धये।
दक्षिणे वसुमतीं देवीम् एकजानुस्थितां भवेत्।।

दक्षिणं लम्बपादं तु रक्ताभां कृष्णवाससम्।
मौलिकेयूरहारं च नानाभूषणालङ्कृताम्।।

वामहस्ते धरेत्पुष्पं सिंहासनतलोपरि।

**स. २०.३३ - ३८**

किञ्चिद् द्वारं समालोक्य किञ्चित्पार्श्वसमाश्रयम्।।

शयानं चोपधाने च सन्न्यस्य मकुटं तथा।
किञ्चिद्दक्षिणकर्णे च स्पृष्ट्वा तत्रोपधानके ।।

सन्न्यस्य दक्षिणं हस्तं मकुटं तेन संस्पृशेत्।
किञ्चित् कुञ्चितमार्गेण वामहस्तं प्रसारयेत्।।

पादं दक्षिणमादाय पद्मा स्वोरुद्वये न्यसेत्।
हस्ताभ्यां मर्दयेत् पादं विस्मयोत्फुल्ललोचना।।

भूमिर्वामं तथा पादमूरौ विन्यस्य मर्दयेत्।
ब्रह्मादिदेवान् कुर्वीत पूर्वोक्तेन विधानतः।।

एतद्वै भोगशयनम् ---------------।

**ज्ञा. ५३.९४**

कञ्चिद् द्वारनिरीक्षितातननं दक्षिणहस्तेन धृतमकुटं किञ्चित्कुञ्चितप्रसारितवामहस्तं तदुपधाने योजितदक्षिणकरमनन्तशयने समासीनं पवित्र्यूरुन्यस्तदक्षिणपादं तथाऽऽसीनमह्यूरुन्यस्तवामपादं शयानं देवं तत्पादे निहितद्विहस्तया पादमर्दिन्या श्रिया भूम्या च संयुतं पूर्ववद् ब्रह्माणं पञ्चायुधरूपैश्च सहितं कुर्यादेतद् भोगशयनम्।

**खि. १२. ६७, ७०**

------------ सुखं चैव[1] प्रवक्ष्यते।।

---

1 सुखशब्दः भोगपरः।

द्विभुजं देवदेवेशं सव्यं चैवोपधानकम्।
प्रसारितं वामहस्तं मया[1] पुण्येन चार्चितम्।।

शिरोभागे श्रियं कुर्यात्पूर्वोक्तं मकुटं चरेत्।
वामपार्श्वे महीं कुर्यात्सुखं तच्छयनं विदुः ।।

दक्षिणे वक्रतुण्डं च वामे कात्यायनीं तथा।
विधिं मधुं कैटभं च तथा चोक्तायुधानि च।
लिखेद्वा परिवारांस्तु प्रतिमार्चकयोश्चरेत्।।

**नि. १४**

भुजद्वयसमायुक्तं दक्षिणं चोपधानकम्।
वामं चोरू समाश्रित्य सर्वालङ्कारसंयुतम्।।

श्रियो भागेश्तियं (?) चैव तस्याश्चारून्यसेंशकम्।
महीं वामे प्रकुर्वीत शेषोपरि विधानतः।।

मार्कण्डेयं भृगुं चैव दक्षिणोत्तरयोः क्रमात्।
इन्द्रादीन् पूर्ववत्कुर्यात् भोगमित्युच्यते बुधैः।।

अथवा देवदेवस्य पादपार्श्वे श्रियं महीम्।
शेषोपरि यथान्यायं कल्पयेत्पार्श्वयोरपि।।

श्रीदेवीं दक्षिणं पादं ब्राह्ममासनवत्कृतम्।
वामपादं प्रकुञ्च्यैव शेषस्योपरि विन्यसेत्।।

वामपादं महीं देवीं ब्राह्ममासनवत्कृतम्।

1 भृगुणा।

प्रकुञ्च्य दक्षिणं पादमनन्तोपरि विन्यसेत्।।

देव्योश्चैवोभयोरूर्वोः पादौ विन्यस्य वै सुधीः।
उभाभ्यां च कराभ्यां च मर्दयेत्तु शनैश्शनैः।।

एतत्तु भोगशयनं कल्पयेत्तन्त्रवित्तमः।

## ४.१५.४५ उत्तमभोगशयनध्रुवबेरस्य स्वरूपम्

### वि. १९.९९

देवं श्यामलाङ्गं दर्शनीयं सुपुष्टाङ्गं चतुर्भुजं द्विभुजं वा अर्धार्धशयनं चापवद्गात्रं हस्तं दक्षिणमुपधाने निधाय, मकुटमवलम्ब्य किञ्चित् प्रसार्य वा वामोरौ प्रसार्य दक्षिणं पादं प्रसार्य वाममाकुञ्च्य शयानं कारयेत्। पादयोरन्तरं विंशत्यङ्गुलं पार्ष्ण्यन्तरं भागं जान्वोश्चतुर्दशाङ्गुलं ब्रह्मसूत्रात् दक्षिणे मुखं त्र्यङ्गुलं तिर्यग्गतं भवति। शिरःपार्श्वे श्रियं देवीं देवस्य बाहुसंस्पृशां सपद्मदक्षिणहस्तां कटिन्यस्तान्यहस्तां पादपार्श्वे महीं देवीं देवस्य वामाङ्घ्रिसंस्पृशां धृतोत्पलदक्षिणहस्तां कटिन्यस्तवामहस्तां कौतुकाद्दक्षिणे मार्कण्डेयं वामे भृगुं तद्दक्षिणे भित्तिपार्श्वे चासीनं ब्रह्माणं वामे शङ्करं च दक्षिणे वक्रतुण्डं वामे विन्ध्यवासिनीं पादपार्श्वे मधुकैटभौ उग्रवेगसमन्वितौ समुद्रतरङ्गाच्छादितजानू अनन्तविषज्वालाभिः दह्यमानौ च कारयेत्। नाभिदेशे पद्मे समासीनं ब्रह्माणं तद्दक्षिणे पञ्चायुधान् गरुडम् उपरिष्टाद्दक्षिणे भास्करं तद्दक्षिणे निशाकरं तथा बालरूपौ तुम्बुरुनारदौ तद्दक्षिणे अश्विनौ अष्टलोकपालान् तथाप्सरसश्च कारयेत्। एतदुत्तमं भोगशयनम्।

### य.१६.९ - १८

### ४.१५.४६ मध्यमभोगशयनध्रुवबेरस्य स्वरूपम्

**वि. १९.९९**

[1]तुम्बुरुनारदाभ्याम् अश्विभ्यां लोकपालैश्च विना मध्यमम्।

**य १६.१८**

### ४.१५.४७ अधमभोगशयनध्रुवबेरस्य स्वरूपम्

**वि. १९.९९**

[2]पूजकमुनिभ्यां अप्सरोभिश्च विना अधमम्।

**य. १६.१८**

### ४.१५.४८ वीरशयनध्रुवबेरस्य स्वरूपम्

**स. २०.३८ - ४०**

-------------- वीरशय्या प्रवक्ष्यते।
न स्पृशेन्मकुटं किञ्चिदुपधाने यथा तथा।।

सन्न्यस्य दक्षिणं हस्तं तत्रैव मकुटं न्यसेत्।
द्वारं सम्यक् समालोक्य शयानं कारयेद् बुधः।।

हस्तद्वयं तथा कुर्याच्चतुर्भुजमथापि वा।
शङ्खचक्रधरौ द्वौ च भुजौ कुर्याद्विधानतः।।

**ज्ञा. ५३.९४**

**खि. १२. ६५ - ६७**

--------------- वीरं चैव प्रवक्ष्यते।
चतुर्बाहुयुतं कुर्यात् शङ्खचक्रसमन्वितम्।।

---

1 उत्तमभोगशयनोक्तपरिवारे इत्यध्याह्रियते।

2 "

सव्यं शिरस्युपहितं वामं हस्तं प्रसारितम्।
उभौ देव्यौ पादयुग्मं मर्दयन्त्यौ शनैः शनैः।।

मार्कण्डेयं च मां[1] चैव कुर्यादावां च पूजकौ।
एवं तु वीरशयनम्-----------------।।

**नि. १४**

चतुर्भुजसमायुक्तं चक्रशङ्खसमायुतम्।।

देवस्य दक्षिणे कर्णे उपधाने विशेषतः।
दक्षिणेनैव हस्तेन मौलिमीषत्स्पृशेत्ततः।।

मार्कण्डेयं च मां चैव एकजानुक्रमेण ह।
पुष्पाञ्जलिसमायुक्तं जटामकुटमण्डितम्।।

कल्पयित्वा यथान्यायं देवीभ्यां रहितं बुधः।
मौल्यान्याभरणोपेतं श्रीवत्साङ्कितवक्षसम्।।

विना हिरण्यगर्भं च देवदेवं विधानतः।
कुर्याद्वीरशयनं च इत्युक्तं ब्रह्मणा पुरा।।

## ४.१५.४९ उत्तमवीरशयनध्रुवबेरस्वरूपम्

**वि. १९.१००**

देवं श्यामाभं चतुर्भुजं शङ्खचक्रधरं सव्यहस्तं शिरोपधानं कृत्वा वामहस्तं प्रसार्य शयानं पादपार्श्वे श्रीभूमिभ्यां पादमर्दिनीभ्यां मधुकैटभाभ्यां संयुक्तं कौतुकाद्दक्षिणे मार्कण्डेयं वामे भृगुं तद्दक्षिणे भित्तिपार्श्वे चा (नाभिपद्मे

1. भृगुम् इत्यर्थः।

समा) सीनं ब्रह्माणं पञ्चायुधान् गरुडं चन्द्रादित्यौ सप्तर्षीन् द्वादशादित्यान् एकादशरुद्रान् जयाद्यप्सरसः तुम्बुरुनारदौ सनकसनत्कुमारौ ब्रह्मेशौ च कारयेत्। एतदुत्तमं वीरशयनम्।

**य. १६. १९ - २२**

### ४.१५.५० मध्यमवीरशयनध्रुवबेरस्वरूपम्

**वि. १९.१००**

[1]रुद्रैरादित्यैरप्सरोभिश्च विना मध्यमम्

**य. १६. २२**

### ४.१५.५१ अधमवीरशयनध्रुवबेरस्य स्वरूपम्

**वि. १९.१००**

[2] किन्नरमिथुनाभ्यां सनकसनत्कुमाराभ्यां पूजकमुनिभ्यां हीनमधमम् ।

**य.१६.२२, २३**

### ४.१५.५२ विरहशयनध्रुवबेरस्य स्वरूपम्

**अ .८**

ब्रह्मादिदेवैः सकलैः रहितं शयनं तथा।
प्रसारितं हस्तयुग्मं पादौ चैव प्रसारितौ।।

किञ्चिदुन्मीलसंयुक्तं वियुक्तं वा यथोचितम्।
विरहं शयनं चैव फणत्रयसमायुतम्।।

सङ्कल्प्य त्रिविधं चैव ध्रुवबेराणि कारयेत्।

---

1 उत्तमवीरशयनोक्तपरिवारे इत्यध्याह्रियते।

2 "

य. १६. २३

[ अत्र विरहे फणमेकं स्यात् इति निर्दिश्यत इति विशेषः। ]

**४.१५.५३ आभिचारिकशयनध्रुवबेरस्य स्वरूपम्**

**य. १६. २३, २४**

-----------सर्पदेहं विना स्थले।।
कारयेदभिचारं तच्छेषं विधिवदाचरेत्।

**४.१५.५४ उत्तमाभिचारिकशयनध्रुवबेरस्य स्वरूपम्**

**वि. १९.१००**

शेषं लक्षणहीनं द्विफणं द्विवलयमुन्नतशिरःपार्श्वं देवं नीलाभं द्विभुजं चतुर्भुजं वा समशयनं महानिद्रासमायुक्तं शुष्कवक्त्रं शुष्काङ्गं श्यामवस्त्रधरं सर्वदेवैर्विहीनं कारयेत्। एतद् उत्तममाभिचारिकं शयनम्।

**४.१५.५५ मध्यमाभिचारिकशयनध्रुवबेरस्य स्वरूपम्**

**वि. १९.१००**

[1]एकफणं एकवलयं मध्यमम्।

**४.१५.५६ अधमाभिचारिकशयनध्रुवबेरस्य स्वरूपम्**

**वि. १९.१००**

[2]सर्पदेहं विना समस्थलशयनमधमम्।

---

1 उत्तमाभिचारिकशयनोक्तपरिवारे इत्यध्याह्रियते।

2 शेषम् उत्तमाभिचारिकशयनवत्।

## ४.१५.५७ योगादिध्रुवबेराणां हस्तभेदकल्पनम्

**अ. १२**

योगभोगादिभेदेषु हस्तानां भेद उच्यते।
अभयं दक्षिणं पूर्वं वरदं स्वगतं तथा।।

कट्यं च सिंहकर्णं च प्रलम्बं च त्रिधा भवेत्।
तद्वामपूर्वहस्तं च योगस्तत्क्रमशस्तथा।।

परहस्तं शङ्खचक्रौ तिर्यङ्मुखं सुमुखं तथा।
हीनं तत्क्रमशः कुर्यात् योगभोगौ च बुद्धिमान्।।
वीरे च सर्वदा शङ्खं कारयेत्सुमुखं क्वचित्।
अन्यथा चेदनर्थं स्यात् कर्ता भर्ता विनश्यति।।

**वा. १**

चतुर्भुजं चतुर्हस्तशङ्खचक्रगदाधरम्।।

दक्षिणे वरदं चैकं कटकं वामकं तथा।
अथवा सव्यहस्तं तु अभयं परिकीर्तितम्।।

अन्यं च वामहस्तं च वरदं कटकं तथा।
कट्यवलम्बितं वाथ कृत्वा चैव विचक्षणः।।

हस्तविन्यासभेदं तु पूर्वमेवं प्रकीर्तितम्।
अथवा कौमोदकी पद्मं त्यक्त्वा तद्देशिकोत्तमः।।

अथ केचिद्वदन्ति स्म दक्षिणाधःकरादिषु।

पद्मं शङ्खं तथा चक्रं कौमोदकीं तु धारयेत्।।

एवंरूपाण्यसङ्ख्यातं यथेष्टं रूपमाचरेत्।
एवंरूपं गृहीत्वैव मध्ये दैवादिमूर्तकम्।।

तस्य बेरस्य परितः कल्पयेत्पुरुषादिकम्।
अद्र्यग्रे शैलमूले वा दैविकेषु निरायुधः।
एवंरूपं सुसम्प्रोक्तम् ।।

## ४.१५.५८ ध्रुवार्चाबेरस्य अवस्थाननियमः

**वि.१५ . ६९**

ध्रुवार्चा चेत् स्थानकमासीनं यानकं वा सर्वाङ्गसम्पूर्णं सुव्यक्तं कारयेत्।

**ज्ञा. ५४.९५**

[1]एतत् स्थानकासनयोरेव विहितम्। नैव शयने कर्तव्यम्।

**अ. ९**

ध्रुवार्चने तु सर्वत्र शयनं नैव कारयेत्।

**य. १६.२७**

ध्रुवार्चायां विशेषेण शयनेन विना चरेत्।

## ४.१५.५९ दारवध्रुवबेरस्य शयनावस्थाननिषेधः

**स.१३.५६**

शयानं दारवं बेरं न कुर्यादिति केचन।

---

1. ध्रुवार्चनम् ।

## ४.१५.६० शयनध्रुवबेरनाभ्यम्बुजे समासीनस्य ब्रह्मणः स्वरूपम्

### वि. २९. १०१, १०२

[1]तत्पद्मकर्णिकामध्ये ब्रह्माणं चतुर्मुखं जटामकुटधरं हिरण्यवर्णं पुष्पाम्बरधरं सर्वाभरणभूषितमुत्तरीयोपवीताभ्यां युक्तं ब्राह्मासने समासीनम्, अक्षमालाकमण्डलुधरं दक्षिणमालोड्यकरं वामं कटिविन्यस्तं चतुर्हस्ताभ्यां प्राञ्जलीकृत्य वा समासीनम् अथवा स्वाङ्के वामावामकरौ प्रसृतौ कारयेत्।

1 नाभिपद्मकर्णिकामध्य इत्यर्थः।